एवं हि श्रूयते यत् अत्रत्येषु सप्तसु तीरीयेषु
देवालयेषु षट् समुद्रेण कवलीकृताः इति । सौभाग्यात्
एकम् एव अवशिष्टम् अस्ति !

मामल्लपुरस्थं तीरस्थं मन्दिरं दक्षिणभारते स्थितेषु अतिप्राचीनेषु मन्दिरेषु अन्यतमम् । अष्टमस्य शतकस्य पूर्वार्धे निर्मितं स्यात् एतत् । असंख्यैः यात्रिकैः दृश्यमानम् अस्ति तमिळुनाडुस्थम् एतत् मन्दिरम् । एतस्मिन् मामल्लपुरे अर्जुनतपस्या (अल्पोर्ध्वतलोपेतं महाशिल्पम् इति जगति एव ख्यातम्), पञ्च रथाः, गुहामन्दिराणि इत्यादीनि अत्रत्यानि अन्यानि आकर्षणानि । चेन्नैतः ५५ कि.मी.दूरे स्थितम् एतत् मामल्लपुरम् अवश्यं सन्दृश्यताम् ।

किं न दृष्टानि
प्राचीनानि
कौतुकानि
एतावतापि?

enchanting
tamil nadu
experience yourself




# ओलम्पिक्प्रश्नस्पर्धा

विशेषपारितोषिकम्



'एसर्'सङ्गणकम्

प्रथमपारितोषिकाणि



चित्रग्राहकाणि

द्वितीयपारितोषिकाणि



गणकयन्त्राणि

न्यूट्रिन्चन्दमामा-ओलम्पिक्-प्रश्नस्पर्धा मेमासतः आरब्धा, षट् मासान् यावत् प्रचलिष्यति च। अधः दत्ताः क्रीडासम्बद्धाः प्रश्नाः भवतां ज्ञानम् अभिरुचिं च वर्धयिष्यन्ति। अधः स्थिते प्रश्नपत्रे समुचितानि उत्तराणि विलिख्य पञ्चभिः 'न्यूट्रिन् चोकलेट् एक्लियर्स्'-आवरणैः सह अन्तिमदिनाङ्कात् पूर्वं **Nutrine Chandamama Contest, Chandamama India Limited No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097** इत्येतस्मै सङ्केताय प्रेष्यन्ताम्।

एषा अखिलभारतीयस्पर्धा। प्रतिमासम् एतस्मिन् पत्रे उत्तरं लिखित्वा प्रेषणेन स्पर्धायां भागः उह्यताम्। प्रतिमासं प्रथमपारितोषिकाणि - ३ कोनिकाचित्रग्राहकाणि। द्वितीयपारितोषिकाणि - १० गणकयन्त्राणि। तृतीयपारितोषिकाणि - ५० न्यूट्रिन्मधुरपुटकाः। पञ्चानां मासानाम् अनन्तरं षष्ठस्पर्धायां विशेषपारितोषिकत्वेन 'एसर्'सङ्गणकं दास्यते। तस्मिन् मासे अन्यानि सामान्यपारितोषिकाणि अपि भवन्ति एव। षट्सु मासेषु स्पर्धायां भागम् ऊढवन्तः सर्वे विशेषपारितोषिकप्राप्तये अर्हाः। विशेषपारितोषिकं प्राप्तवते डिसेम्बर्मासे सूचना प्रेषयिष्यते।

## न्यूट्रिन्चन्दमामा-ओलम्पिक्प्रश्नस्पर्धा - ५

**किं भवन्तः जानन्ति ?**



जोनी वेसमुल्लर् कश्चन तरणपटुः। सः ओलम्पिक्स्पर्धासु बहूनि स्वर्णपदकानि प्राप्तवान्। तदनन्तरं सः १९ चलनचित्रेषु टार्झान्पात्रं निरूढवान्।

सावधानतया अधः दत्तान् सर्वान् प्रश्नान् पठित्वा प्रतिप्रश्नम् उत्तरलेखनाय कल्पिते स्थले समुचितस्य उत्तरस्य पुरतः (✔) चिह्नम् अङ्क्यन्तु।

१. सिड्नी-ओलम्पिक्स्पर्धायां महिलामेरथान्स्पर्धायां का जयं प्राप्तवती ?
- ☐ नूको तकाहशी ☐ मेरी जोस् पेरेक् ☐ पौला इवान्

२. ओलम्पिक्स्पर्धासु पुरुषविभागे दीर्घकूर्दनस्पर्धायाम् अतिक्रान्तम् अधिकदूरस्य परिमाणं किम् ?
- ☐ ७.०० मी. ☐ ७.४ मी. ☐ ७.८ मी.

३. कस्मिन् वर्षे ओलम्पिक्स्पर्धासु टेन्नीस्क्रीडायाः अपि समावेशः कृतः ?
- ☐ १९३६ तमे वर्षे ☐ १९८८ तमे वर्षे ☐ १९९२ तमे वर्षे

४. १९७६ तमात् वर्षात् भारोन्नयनस्पर्धायां कति प्रकाराः परिकल्पिताः सन्ति ओलम्पिक्स्पर्धासु ?
- ☐ चत्वारः ☐ षट् ☐ दश

५. एतस्य मासस्य न्यूट्रिन्विज्ञापिकायां 'M' इत्येतत् आंग्लाक्षरं कतिवारम् आवृत्तम् ?
- ☐ नववारम् ☐ चतुर्वारम् ☐ सप्तवारम्

**स्पर्धानियमाः -** ● न्यूट्रिन्-चन्दमामासंस्थयोः उद्योगिनः तेषां बान्धवाः वा स्पर्धायां भागवहनाय अनर्हाः। ● न्यूट्रिन्संस्था निर्णायकानां चयने पूर्णाधिकारम् अर्हति। ● भारते जाताः ऊनपञ्चदशवर्षीयाः बालाः स्पर्धायां भागं वोढुम् अर्हाः। ● स्पर्धादिनाङ्कस्य विस्तारे सङ्कोचे च न्यूट्रिन्जनानाम् एव अन्तिमः अधिकारः। ● भागग्राहिणः वयसः दृढीकरणाय जन्मदिनाङ्कप्रमाणपत्रं दद्युः। ● समुचितोत्तरदातारः बहवः सन्ति चेत् 'लाटरी'पद्धत्या पारितोषिकार्हाणां चयनं करिष्यते। ● पारितोषिकभाजः पत्रेण सूच्यन्ते। ● पारितोषिकं वस्तुरूपेणैव, न तु धनरूपेण। ● पारितोषिकरूपेण दत्तानां वस्तूनां 'वारण्टी' निर्मातृसंस्थाधीनम्। ● एकः एव प्रतिमासम् अपि भागं ग्रहीतुम् अर्हति। ● षट्सु मासेषु कस्मिंश्चित् एकस्मिन् एव भागग्रहणम् अपि शक्यते। ● पत्रव्यवहारस्य न अवकाशः। ● स्पर्धापत्रं प्रेषितम् इत्यस्य तात्पर्यं यत् स्पर्धानियमाः सर्वे अङ्गीकृताः इति। ● अन्तिमदिनाङ्कानन्तरं प्राप्तं प्रवेशपत्रं स्पर्धायै न परिगण्यते। ● समुचितम् उत्तरं केनापि न दत्तं चेत् अल्पदोषयुक्तानि पत्राणि पारितोषिकाय परिगण्यन्ते। ● निर्णायकानां निर्णयः एव अन्तिमः।

**अन्तिमः दिनाङ्कः - ३०, सप्टम्बर् २००४**

नाम ..............................

वयः .............. कक्ष्या .............. जन्मदिनाङ्कः ..............

गृहसङ्केतः (पिन्कोड्सहितः) ..............................

..............................

हस्ताक्षरम् ..............................










India's largest selling sweets and toffees.

## एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ सप्टम्बर् - २००४ सञ्चिका - ६



भल्लूकमान्त्रिकः
१३



आत्माभिमानी
(वेतालकथा)
१९



धर्मबोधकेन
प्राप्तः बोधः
४२



विष्णुपुराणम्
४५

## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, **CHENNAI - 600 097**
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १४४/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



संस्थापकौ -
चक्रपाणिः, बि.नागिरेड्डिः च

## दुःखदायिनी घटना, या च निवारयितुं शक्या आसीत्

सः आसीत् कश्चन साहसी तरुणः । परोपकारशीलः अपि आसीत् सः । प्रज्वलतः अग्नेः तापम् अपि अविगणय्य सः द्विवारम् अग्निं प्रविश्य स्वस्य भगिनीम् अन्यां बालिकां च रक्षितवान् । तृतीयवारं यदा गतं तदा अग्निः तस्य प्राणान् ज्वालाभिः अहरत् एव । सः नामावशेषतां गतः । प्रायः पुनः तस्य नाम श्रुतं भविष्यति 'बालदिने', यस्मिन् च साहसं कृतवद्भ्यः, साहसं कृत्वा मरणं प्राप्तवतां बन्धुभ्यः वा 'साहसप्रशस्तिः' दीयते ।

पूर्वोक्ता घटना कुम्भकोणे सद्यःकाले विद्यालयीयायां दुर्घटनायां प्रवृत्ता । तस्यां दुर्घटनायां मुग्धाः शताधिकाः बालाः मरणं प्राप्तवन्तः । प्रायः ते सर्वे ऊनद्वादशवर्षीयाः एव । दुर्घटनासमये विंशत्यधिकाः अध्यापकाः अपि आसन् तत्र । किन्तु तैः एकस्यापि प्राणरक्षणं न कृतम् ।

अस्माकं संस्कृतौ आदिपूज्यौ भवतः मातापितरौ । तृतीयं पूज्यं स्थानं तु गुरोः एव । ते त्रयः अपि दैवतत्वेन भाव्यन्ते । अतः अध्यापकैः तदनुगुणः व्यवहारः करणीयः इति अपेक्षा तु अनुचिता न खलु ?

विद्यालयः नाम विद्यायाः आलयः । सः देवस्य आलयः इव एव पवित्रतमः । तदनुगुणा व्यवस्था स्यात् तत्र । सुरक्षादयः अपि तत्र अवश्यं स्युः एव । सामान्यम् आनुकूल्यं तु स्यादेव ।

ये विद्यालयं चालयन्ति तैः व्यवस्थापकैः एतेषाम् अंशानां विषये विशेषावधानं दातव्यम् ।

सम्पादकः - विश्वम्



## वाचकानां कृते कथास्पर्धा (एप्रिल्)

# अङ्गुलिधारणचिह्नम्



'एतत् राज्ञः अङ्गुलीयकम् । एतस्य चौर्यं कृतवता शूलारोपणदण्डः प्राप्यते' इति न्यायाधीशेन यदा उक्तं तदा तौ उभौ अपि क्षणकालं स्तब्धौ । अङ्गुलीयकस्वामिनः मनसि भीतिः आसीत् यत् अङ्गुलीयकं ममैव इति निरूपयितुम् अपेक्षितं प्रमाणं मत्समीपे नास्ति इति । मदीयं यादृशम् अस्ति तादृशम् एव राज्ञः अपि भवेत् कदाचित् इति विचिन्त्य सः अवदत् - "श्रीमन् ! एतत् अङ्गुलियकं ममैव । मम श्वशुरेण मह्यं दत्तम् एतत्" इति ।

न्यायाधीशः अपरम् अपृच्छत् - "भवता एतत् कथं प्राप्तम् ?" इति ।

"मया अपि विवाहसमये प्राप्तम् एतत्" इति अवदत् अपरः ।

अग्रे किं प्रष्टव्यं, कथं व्यवहरणीयम् इति न्यायाधीशेन अपि न ज्ञातम् । अतः सः अवदत् - "भवन्तौ राज्ञः समीपं नेष्यामि । सः एव निर्णयं करिष्यति" इति ।

अनन्तरदिने ते त्रयः राजास्थानं गतवन्तः । न्यायाधीशः राज्ञः कर्णे मन्दं किमपि उक्त्वा अङ्गुलीयकं राज्ञः पुरतः संस्थाप्य अभियोगं सङ्ग्रहेण उक्तवान् ।

राजा अङ्गुलीयकं क्षणकालं परीक्षितवान् । सा प्राचीना इव लक्षिता तेन । सः उभौ अपि यात्रिकौ स्वसमीपम् आहूतवान् । आदौ प्रथमयात्रिकं सः सूचितवान् - 'भवान् एतत् धरतु' इति । सः धृतवान् । तत् तदङ्गुल्यनुगुणम् एव आसीत् । अङ्गुलौ तस्य धारणात् जातं चिह्नम् अपि दृश्यते स्म । अपरः यात्रिकः तत् धर्तुं यदा प्रयासं कृतवान् तदा तत् तेन धर्तुं न शक्तम् । अङ्गुलयः तस्य स्थूलाः कृशाः वा आसन् । अन्यच्च अङ्गुलीयकधारणचिह्नम् अपि तस्य अङ्गुलौ न आसीत् ।

एतस्मात् राज्ञा अङ्गुलीयकस्य स्वामी अभिज्ञातः । सः तत् तत्स्वामिने दत्त्वा तं प्रेषितवान् । असत्यवादिने अङ्गुलिकर्तनरूपं दण्डं विहितवान् च ।

अविनाशः s/o आर्.पि.यादवः (षष्ठकक्ष्या)
ज्ञानकुञ्ज अकादमी, वंसीबजार, बलिया (उ.प्र.)



# साहसिनौ सहोदरौ

कस्मिंश्चित् लघुनि देशे रङ्गदेवः सोमदेवः चेति सहोदरौ वसतः स्म । तयोः भ्रातृत्वं गाढम् आसीत् । तयोः पत्न्यौ अपि परस्परकलहं विना प्रेम्णा व्यवहरतः स्म । अतः तयोः सहोदरयोः कौटुम्बिकः क्लेशः अल्पः अपि न आसीत् ।

कदाचित् सायङ्काले तौ सुखेन उपविश्य वार्तालापं कुर्वन्तौ आस्ताम् । तदवसरे रङ्गदेवः सोमदेवम् अवदत् – ''आवाम् एतस्मिन् एव ग्रामे वसावः चेत् आवयोः आर्थिकी प्रगतिः सर्वथा न भवेत् । यत् प्राप्यते तत् कुटुम्ब-निर्वहणाय एव व्ययितं भवति । अतः मम तु भाति यत् अत्रत्यां भूमिं विक्रीय राज्ञः चन्द्र-हासस्य आस्थाने कमपि उद्योगं प्राप्नुयाव चेत् वरम् इति'' इति ।

''भवतः कथनं युक्तम् एव । मया श्रुतं यत् राजा साहसिषु विशेषाभिमानं वहति इति । आवयोः तु साहसप्रवृत्तिः अस्ति एव । अतः राजा आवयोः कृते अवश्यम् उद्योगं दद्यात्'' इति अवदत् सोमदेवः ।

तयोः चिन्तनं ज्ञात्वा रङ्गदेवस्य पत्नी अवदत् – ''राज्ञः आस्थानं प्रति गमनं तु वरम् एव । किन्तु गमनात् पूर्वं किमपि साहसं कृत्वैव गन्तव्यम् । तत्सम्बद्धं प्रमाणं दर्शितं चेदेव राजा सन्तुष्टः भवेत् । केवलया साहसवार्तया न प्रयोजनम्'' इति ।

एतत् युक्तम् अमन्येतां तौ । पूर्वस्मिन् एव दिने कश्चन व्याघ्रः तं ग्रामं प्रविश्य जनान् मारयितुं प्रयत्नं कृतवान् आसीत् । यदा जनाः सर्वे सम्भूय तं भायितवन्तः तदा सः व्याघ्रः समीपस्थम् अरण्यं प्रविष्टवान् आसीत् । 'सः व्याघ्रः एव आवाभ्यां मारणीयः' इति तौ निश्चितवन्तौ ।

अनन्तरदिने तौ लवित्रं शूलं च गृहीत्वा अरण्यं प्रविष्टवन्तौ । अरण्ये गुल्मस्य पृष्ठतः हरिणस्य खादने मग्नः व्याघ्रः दृष्टः ताभ्याम् । तौ दृष्ट्वा सः व्याघ्रः गर्जन् आक्रमणाय उद्युक्तः । तस्मिन् एव समये तयोः अन्यतरः शूलं

क्षिप्तवान् । अपरः लवित्रेण प्रहृतवान् । तयोः प्रहारं प्राप्य गर्जन् भूमौ पतितः व्याघ्रः तत्रैव प्राणैः वियुक्तः जातः । व्याघ्रं स्कन्धे आरोप्य तौ ग्रामम् आगतवन्तौ ।

व्याघ्रस्य दर्शनाय जनाः सम्मिलिताः । ते तयोः प्रशंसां कुर्वन्तः उक्तवन्तः - ''धीरता नाम एषा । भवन्तौ असाधारणसाहसिनौ । भवतोः धैर्यं तु नितरां प्रशंसार्हम् अस्ति'' इति ।

एवं साहसपूर्णं कार्यं कृतवन्तौ तौ सहोदरौ भूमिं विक्रीय आवश्यकानि वस्तुनि शकटे आरोप्य पत्नीसहिततया राजधानीं प्रति गतवन्तौ । तत्र कस्याश्चित् धर्मशालायां तैः वासः कृतः ।



अनन्तरदिने व्याघ्रचर्म स्वीकृत्य तौ राजदर्शनाय प्रासादं गतवन्तौ । वीरोचितं वेषं धृतवन्तौ आस्तां तौ । 'वीरवेषं व्याघ्रचर्म च दृष्ट्वा द्वारपालकाः आवाम् आदरेण राजसमीपं नेष्यन्ति' इति तयोः चिन्तनम् आसीत् । किन्तु तथा तु न प्रवृत्तं तत्र ।

यावत् उत्कोचः न दास्यते तावत् अन्तः प्रवेशः भवितुं न अर्हति इति स्पष्टशब्दैः उक्तवन्तः द्वारपालकाः ।

द्वारपालकाः एवं निर्भयतया उत्कोचं यत् पृच्छन्ति तत् दृष्ट्वा तौ आश्चर्येण स्तब्धौ । उत्कोचदानं विना अन्या गतिः न आसीत् इत्यतः तौ एकैकस्मै द्वारपालकाय रजतमुद्राद्वयं दत्त्वा अन्तः प्रवेशं प्राप्तवन्तौ ।

राजा चन्द्रहासः तयोः वीरवेषं व्याघ्रचर्म च दृष्ट्वा नितराम् असन्तुष्टः । सः असन्तोषेण एव - ''भवतोः आगमनस्य कारणं किम् ?'' इति अपृच्छत् ।

तदा तौ व्याघ्रमारणस्य उद्देशं तदर्थं कृतं साहसं च विस्तरेण उक्तवन्तौ । प्राणापायम् अपि अविगणय्य एतत् साहसं कृतम् इत्यपि उक्तवन्तौ तौ ।

किन्तु राजा तयोः कथने विशेषासक्तिम् अप्रदर्शयन् अवदत् - ''भवादृशाः साहसशीलाः एतस्मिन् देशे बहवः सन्ति । तादृशेभ्यः सर्वेभ्यः राजास्थाने उद्योगः दातुं न शक्यः'' इति ।

एकैकस्मै अपि शतं रजतमुद्राः दत्त्वा तौ प्रतिप्रेषितवान् सः ।

निराशतां प्राप्य आगतौ तौ दृष्ट्वा तयोः पत्न्यौ नितरां खिन्ने ।

दिनद्वयस्य अनन्तरं रङ्गदेवस्य पत्नी उक्तवती - ''कदाचित् यथा वयं चिन्तयामः तथा



न प्रवर्तते । इदानीं ग्रामं प्रति प्रतिनिवर्तनं तु अशक्यम् । यदि प्रतिगच्छेम तर्हि जनाः अस्मान् उपहसेयुः । अतः राज्ञा दत्तं धनम् उपयुज्य वाणिज्यस्य आरम्भः एव वरम्'' इति ।

तौ आहारपदार्थानां विषये पूर्णज्ञानवन्तौ आस्ताम् । अतः तौ निश्चितवन्तौ यत् आहारवस्तूनां कश्चन आपणः आरम्भणीयः इति । यदा आपणारम्भस्य प्रयत्नः आरब्धः तदा ताभ्यां ज्ञातं यत् एतत् सरलं सर्वथा नास्ति इति ।

आपणः आरब्धव्यः चेत् आदौ नगरपालकस्य अनुज्ञा प्राप्तव्या इति ताभ्यां ज्ञातम् । अतः तौ नगरपालकस्य गृहं गतवन्तौ । तत्र ज्ञातं यत् द्विशतं रजतमुद्राः उत्कोचरूपेण दत्ताः चेदेव अनुमतिपत्रं प्राप्यते इति ।

एतत् ज्ञात्वा नितरां क्रुद्धः सोमदेवः अवदत् - ''किमेतत् ? प्रतिपदम् उत्कोचः दातव्यः खलु अत्र ? राजा एतेषाम् उत्कोचग्राहिणां व्यवहारं जानन् अपि मौनेन आस्ते । किम् एतत् युक्तम् इति सः राजा एव प्रष्टव्यः अस्माभिः'' इति ।

''युक्तम् एतत् । वाणिज्यं करणीयं न वेति अनन्तरं निर्णयाव । भवता यथा उक्तं तथा आदौ राजानम् एव एतस्य युक्तायुक्ततां पृच्छाव'' इति अवदत् रङ्गदेवः ।

ततः तौ पुनरपि राजभवनं गतवन्तौ । तत्र द्वारपालकौ उत्कोचं पृष्टवन्तौ एव । सोमदेवः पूर्वम् एव निर्णीतवान् आसीत् यत् एतादृशे अवसरे किं करणीयम् इति ।

अतः सः दीनस्वरेण अवदत् - ''आवयोः समीपे वराटिकामात्रम् अपि धनं नास्ति । मम अङ्गुलौ स्थितम् एतत् सुवर्णाङ्गुलीयकम् एकमेव मूल्यार्हं वस्तु । कृपया आवयोः अन्तः गमनाय अनुज्ञा दीयताम् । राजा सन्तुष्टः सन् यदि किमपि उपायनं दद्यात् तर्हि एतत् सुवर्णाङ्गुलीयकम् एव भवद्भ्याम् उपायनीकरिष्यते मया'' इति ।

''तत् अङ्गुलीयकम् इदानीम् एव उपायनीक्रियताम्'' इति उक्त्वा दर्पं दर्शयन्तौ सोमदेवात् अङ्गुलीयकं बलात् एव वशीकृतवन्तौ तौ द्वारपालकौ ।

पुनः अपि अन्तः आगतौ तौ दृष्ट्वा राजा चन्द्रहासः झटिति अभिज्ञाय तीक्ष्णस्वरेण अपृच्छत् - ''पुनः किमर्थम् आगतम् अत्र ?'' इति ।

तदा सोमदेवः विनयेन प्रवृत्तं सर्वं निवेद्य -

''महाराज ! एषा उत्कोचग्राहिता व्याघ्रात् अपि अधिकभयकारिणी । यदि मया उक्ते भवतः सन्देहः तर्हि भवान् स्वयं परीक्षां करोतु । मया दत्तं नीलमणियुक्तम् अङ्गुलीयकम् इदानीम् अपि द्वारपालकयोः समीपे अस्ति'' इति अवदत् ।

एतत् श्रुतवतः राज्ञः मुखे प्रसन्नता प्रसृता । सः सोमदेवं प्रशंसापूर्णया दृष्ट्या पश्यन् उक्तवान् - ''भवादृशः एव साहसी मया अपेक्ष्यते । उत्कोचग्राहिता व्याघ्रात् अपि घोरतरा इति भवता युक्तम् एव उक्तम् । केभ्यश्चित् मासेभ्यः पूर्वम् एव मया अपि अवगतम् आसीत् यत् मम देशे उत्कोचग्राहिता कटस्य अधः प्रवहत् जलम् इव मन्दं सर्वत्र प्रसरन्ती अस्ति इति । केषाञ्चित् परिशुद्धानां साहसशीलानां साहाय्यं विना अहम् एकाकी एतं व्याधिं निरोद्धुं न शक्नोमि इत्यतः एतावत्-पर्यन्तं मौनेन आसम् । एतां प्रवृत्तिं विरुध्य किं कोऽपि स्वरम् उत्थापयेत् इति प्रतीक्षमाणः आसम् । एतदवसरे एव भवन्तौ भगवता प्रेषितौ इव अत्र उपस्थितौ । महतः सन्तोषस्य विषयः एषः'' इति ।

राज्ञः एतत् वचनं श्रुत्वा नितरां सन्तुष्टः सोमदेवः विनयेन अवनम्य राजानं नमस्कृत-वान् ।

द्वित्रक्षणानन्तरं राजा सोमदेवम् उक्तवान् - ''अद्य आरभ्य भवता राज्यस्य कर्मचारिणां परिवीक्षणं करणीयम् । एतस्य विभागस्य प्रमुखं कृतवान् अस्मि भवन्तम् अद्यैव । उच्चः अधिकारी अपि कश्चित् यदि कदाचित् उत्कोचं स्वीकृतवान् इति ज्ञायेत तर्हि तं न्यायालयं प्रति नेतुं सम्पूर्णः अधिकारः भवते दीयते मया'' इति ।

ततः सः रङ्गदेवं पश्यन् अवदत् - ''भवतः अग्रजः एषः भवान् इव वाक्पटुः तु न । तथापि व्याघ्रमारणे, अत्र आगमने च भवता सह स्थितः सः भवादृशः एव साहसी । अतः तं नूतननगरपालकं कृतवान् अस्मि'' इति ।

एवम् उभौ अपि सहोदरौ राजास्थाने उच्चम् उद्योगं प्राप्तवन्तौ । राज्ये भ्रष्टाचारस्य निवारणाय तौ विशेषप्रयासं कृतवन्तौ । तत्र साफल्यम् अपि प्राप्तं ताभ्याम् । एवं तौ राज्ञः प्रीतिपात्रतां गतौ ।



# कोपशीलः धनिकः

महापुरनामके ग्रामे बलभद्रनामकः कश्चन कृषिकः आसीत् । सः महाकोपशीलः । ग्रामे कस्यापि विषये सः योग्यरीत्या न व्यवहरति । महद्भिः जनैः सह अपि तस्य वार्तालापः कोपस्वरेण एव भवति स्म । यः कोऽपि तस्य एतं स्वभावं यदि आक्षिपति तर्हि तमेव बलभद्रः वदति स्म – ''भवान् कः मां बोधयितुम् ? काशीनगरे विद्याभ्यासः कृतः किं भवता ? अथवा रामेश्वरतः आगतं किम् ? गच्छतु, गच्छतु । स्वीये कर्मणि अवधानं ददातु'' इति ।

शैत्यकाले कस्मिंश्चित् दिने सः प्रभाते पञ्चषैः पुरुषैः सह अग्नेः पुरतः उपविश्य शैत्यं परिहरन् आसीत् । तस्य समीपे एव उपविष्टः मिलिन्दनामकः तदीयस्य दुकुलम् अग्निना व्याप्तं लक्षितवान् । किन्तु बलभद्रं तं विषयं वक्तुं धैर्यम् अप्राप्नुवन् सः मौनम् आश्रितवान् । यतः स्वभावेन सः भीरुः ।

सः जानाति स्म यत् बलभद्रः महान् कोपशीलः, झटिति यत्किमपि वदति च इति । किन्तु यदा अग्निः दुकूलस्य अधिकभागे व्याप्तः तदा बलभद्रं जागरयितुं सः: उक्तवान् – ''बलभद्रवर्य, किञ्चित् वक्तुम् इच्छामि, कथयामि किम् ?'' इति ।

तदा कोपेन बलभद्रस्य नेत्रे रक्तवर्णे जाते । कठोरस्वरेण सः – ''मां वक्तुम् इच्छतः भवतः कियत् धार्ष्ट्यम् ? जागरूकः भवतु । इतोऽपि एकः शब्दः अपि यदि भवतः मुखात् निस्सरेत् तर्हि भवदीयां जिह्वां कर्तयिष्यामि'' इति कथयन् आकस्मिकतया स्वदुकूलं दृष्टवान् । तावता दुकूलस्य अधिकः भागः अग्निना व्याप्तः आसीत् ।

झटिति तं दुकुलम् दूरे क्षिप्त्वा सः मिलिन्दम् उक्तवान् – ''मूर्ख, मम दुकूलम् अग्निना दह्यमानं दृष्ट्वा अपि तत् किमर्थं न उक्तं भवता ?'' इति ।

तदा मिलिन्दः उक्तवान् – ''किं करवाणि ? भवतः मनःस्थितिः विचित्रा । भवान् सर्वदा कुपितः भवति, निन्दति च । अहं तु अग्निविषयं वक्तुम् उद्युक्तः । किन्तु भवतः कोपशीलता मां न्यवारयत् । यतः मया काशीनगरे विद्याभ्यासः न कृतः । रामेश्वरतः अपि न आगतम्'' इति ।





# भल्लूकमान्त्रिकः

## ९

*[गजः अङ्गरक्षकस्य अनुसरणम् अकरोत् । अङ्गरक्षकः धावन् उग्रदण्डसमीपम् आगतः । अत्रान्तरे सचेतनतां प्राप्तवान् राजा दुर्मुखः उत्थाय अरण्यं प्रति धावितवान् । कश्चन भिल्लयुवकः चित्रकम् उद्दिश्य बाणं प्रयुक्तवान् । तस्मात् व्रणितः चित्रकः वृक्षात् अपतत् । राजा दुर्मुखः अपि वृक्षात् अपतत् । तदनन्तरम्.... ]*

राजानं दुर्मुखं चित्रकं च वृक्षात् पतितं दृष्ट्वा अङ्गरक्षकः उच्चस्वरेण अवदत् - ''भो भोः ! किं केवलेन दर्शनेन ? बाणप्रयोगेण एषः चित्रकः मार्यताम्'' इति ।

राजा दुर्मुखः वृक्षात् आदौ कस्यचित् गुल्मस्य उपरि पतितः, तदनन्तरं भूमौ पतितः । अतः सः किञ्चिदपि न व्रणितः ।

अङ्गरक्षकः चित्रकम् क्रोधमिश्रितया दृष्ट्या पश्यन् अवदत् - ''महाराज ! नितरां व्रणितः अयं चित्रकः भवतः उपरि अभि-पतितुम् उद्युक्तः अस्ति'' इति ।

चित्रकस्य आक्रमणात् आत्मानं रक्षन् राजा दुर्मुखः धावन् किञ्चिद्दूरं गत्वा अङ्गरक्षकं तीक्ष्णदृष्ट्या पश्यन् अवदत् - ''किं भवतः बुद्धिः सर्वथा विनष्टा अस्ति ? अविलम्बेन एतं चित्रकं खड्गेन मारयतु तावत् । एषः भिल्लतरुणः किम् अस्मद्देशीयः ? दर्शनात् तु भासते अयं कश्चन मूर्खः इति'' इति ।

व्रणितः चित्रकः तु एकैकं पदम् अग्रे स्थापयन् राज्ञः दुर्मुखस्य दिशि गच्छन्



भवतु । अन्यथा एषः भवन्तं, मां च मारयेत् अपि'' इति ।

अत्रान्तरे भिल्लतरुणः एकं बाणम् अङ्गरक्षकस्य पुरतः भूमौ प्रयुज्य अपरं बाणं धनुषि संयोज्य तं लक्ष्यीकृत्य गृहीत्वा – ''मम प्रश्नस्य उत्तरं किमर्थं न दीयते भवता ? मम एषः बाणः भवतः प्राणान् एव अपहरेत् । स्मरतु'' इति अवदत् ।

राजा दुर्मुखः कोषात् खड्गम् आकृष्य यद्यपि हस्तेन गृहीतवान् तथापि चित्रकस्य सम्मुखीकरणे धैर्यम् अप्राप्नुवन् ततः पलायनाय उद्युक्तः सन् – ''अये भिल्लयुवक ! अहम् एव उदयगिरिराजः दुर्मुखः । भाग्यं मम उपकारकं न जातम् । अतः मया एवम् अरण्ये भ्रमणं करणीयम् अभवत् । भवतः बाणः चित्रकस्य मर्मस्थाने न लग्नः आसीत् । अतः अपरस्य बाणस्य प्रयोगं कृत्वा तं मारयतु'' इति अवदत् ।

''एतावत् पूर्वम् एव उक्तं चेत् एषः कालविलम्बः न अभविष्यत् । विना सेनाम् अरण्यं प्रति आगमनं मूर्खतायै इति किं न ज्ञायते भवता ?'' इति अवदत् भिल्लतरुणः ।

एतावत् उक्त्वा भिल्लयुवकः अङ्गरक्षकम् उद्दिश्य गृहीतं बाणं चित्रकं लक्ष्यीकृत्य प्रयोक्तुम् उद्युक्तः । किन्तु तावता चित्रकः गर्जन् राज्ञः समीपं गतः एव । राजा दुर्मुखः चित्रकस्य उपसर्पणं दृष्ट्वा भीत्या पलायनं कर्तुम् उद्युक्तः । चित्रकः तस्य अनुसरणम् अकरोत् । तदा पार्श्वस्थः उग्रदण्डः राजानं गृह्णन् अवदत् – ''अये भीरो ! चित्रकं दृष्ट्वा अपि किम् एवं भीरुणा इव धाव्यते ? कीदृशः राजा

आसीत् । एतत् दृश्यं पश्यन् अपि निश्चलतया स्थितः भिल्लतरुणः मन्दहासपूर्वकम् – ''अहं मूर्खः एव स्यां नाम । किन्तु तादृशः मूर्खः तु न, यश्च सुवर्णमुद्राणां मूल्यम् अपि न जानीयात् । पञ्च सुवर्णमुद्राः दीयन्ते इति प्रतिज्ञातं खलु आसीत् ? ताः सुवर्णमुद्राः क्व ? इदानीम् एव ताः कुतः न दीयन्ते ?'' इति उक्त्वा धनुषि बाणं योजयित्वा अङ्गरक्षकं लक्ष्यीकृत्य गृहीत्वा – ''भवान् एतं महाराजत्वेन सम्बोधयति खलु ? किं वस्तुतः अपि अयं महाराजः एव, उत तद्वेषधारी अन्यः ?'' इति अपृच्छत् ।

व्रणितः चित्रकः पुनरपि आक्रमणेन राजानं दुर्मुखं मारयितुं प्रयतमानः अस्ति इति जानन् अङ्गरक्षकः स्वस्य कोषात् खड्गम् आकृष्य राजानम् अवदत् – ''महाराज ! भवान् खड्गम् आकृष्य चित्रकस्य सम्मुखीकरणाय उद्युक्तः

भवान् ?'' इति ।

राजा दुर्मुखः नखशिखान्तं कम्पमानः यावत् किमपि वक्तुम् उद्युक्तः तावता क्रुद्धः चित्रकः तस्य समीपम् आगतवान् एव । एतत् दृष्ट्वा उग्रदण्डः हस्तेन तं चित्रकं बलात् ताडितवान् । तस्मात् चित्रकः भूमौ अपतत् ।

उग्रदण्डः तं चित्रकं क्रीडनकम् इव गृहीत्वा राजानम् अवदत् – ''देशस्य शासनं कुर्वतः भवतः अपि एषः वन्यः पशुः एव अधिक-धैर्यशाली'' इति ।

तावता चोरनायकः नागमल्लः, तस्य अनुचरौ, वधकः भल्लूकः च तत्र आगताः । नागमल्लः दुर्मुखं पश्यन् अवदत् – ''भवता तु स्वयम् एव उक्तम् अस्ति यत् अहं दुर्जयगुप्तः न, अपि तु राजा दुर्मुखः अस्मि इति । अतः वयं राजानं भवन्तं सुरक्षिततया राजधानीं प्रापयिष्यामः । तदर्थं यत् उचितं मन्यते तत् उपायनं दातुम् अर्हति भवान्'' इति ।

एतत् श्रुत्वा वधकभल्लूकः – ''जयतु शिरीषभैरवः !'' इति सकृत् उद्घोष्य परशुम् उन्नीय अवदत् – ''अयि भोः, भवन्तः सर्वे सावधानं शृण्वन्तु । मम गुरुः भल्लूकमान्त्रिकः राज्ञः दुर्मुखस्य शीर्षस्य प्रतीक्षां कुर्वन् स्यात् । अतः एतस्य शिरः कर्तयित्वा एव अहं राजधानीं गमिष्यामि । भवद्भिः सर्वैः एतस्य कलेवरः आनेतव्यः भविष्यति । कलेवरस्य आनेतृभिः पारितोषिकत्वेन किं प्राप्येत इति किं भवद्भिः ज्ञायते ? राजपक्षीयैः भवतां शिरश्छेदः करिष्यते'' इति अवदत् ।

''अये वधकभल्लूक ! भवता महत् चातुर्य-पूर्णं वचनम् उक्तम् !'' इति वदन् हस्तस्थं



चित्रकं दूरे क्षिप्त्वा परितः स्थितान् सकृत् दृष्ट्वा राक्षसः उग्रदण्डः अवदत् – ''असहाय-स्थितौ स्थितस्य दुर्मुखराजस्य शिरसः कर्तनस्य विचारः न्यायसङ्गतः न । भवन्तः किम् अभिप्रयन्ति एतद्विषये ?'' इति ।

वधकभल्लूकात् ऋते अन्ये सर्वे राक्षसस्य उग्रदण्डस्य कथनं समर्थितवन्तः । तदा वधक-भल्लूकः परशुम् अधः कृत्वा दीनतापूर्णेन स्वरेण अवदत् – ''एवं तर्हि मम का वा गतिः ? राज्ञः दुर्मुखस्य शिरः कर्तनीयम् इति उद्देशेन एव मानवं मां भल्लूकरूपेण परि-वर्तितवान् अस्ति मान्त्रिकः । यदि अहं तस्य वचनम् अपालयन् रिक्तहस्ततया गच्छेयं तर्हि सः महामान्त्रिकः मम प्राणान् पिबेत्, आजीवनं मां भल्लूकरूपेण एव स्थापयेत् वा । तदा अहो, मम कीदृशी दुर्गतिः भवेत् !'' इति ।

''एषोऽपि चिन्तनीयः अंशः एव । एतस्याः



समस्यायाः परिहारमार्गः कः ?'' इति अवदत् राक्षसः उग्रदण्डः ।

तदा अङ्गरक्षकः अग्रे आगत्य अवदत् - ''उग्रदण्डमहाराज ! मम एका सूचना अस्ति । यदि महाराजः सजीवं तत्र नीयेत तर्हि मान्त्रिकः अग्रिमं पदं निर्णेतुम् अर्हति । राजा प्राप्तः इत्यतः वधकभल्लूकस्य अपायः अपि अपगन्तुम् अर्हति'' इति ।

''भोः, एतस्मिन् विषये भवतः अभिप्रायः कः ?'' इति वधकभल्लूकम् अपृच्छत् उग्रदण्डः ।

''एतत् घोरम् अरण्यम् अतिक्रम्य भल्लूकमान्त्रिकसमीपं दुर्मुखस्य नयनं किं सुकरं कार्यम् ? यदाकदाचिदपि सः मां वञ्चयितुम् अर्हति एव । इतः पूर्वम् अपि तादृशम् एव प्रयत्नं कृत्वा पलायितवान् आसीत् सः । किन्तु सौभाग्यवशात् सः अद्य पुनरपि सम्प्राप्तः अस्ति मया'' इति वदन् वधकभल्लूकः दुर्मुखस्य दिशि प्रस्थातुम् उद्युक्तः ।

तदा दुर्मुखः उग्रदण्डस्य पृष्ठतः तिष्ठन् उच्चस्वरेण - ''उग्रदण्डमहाराज ! अहं भवन्तं शरणं गतः अस्मि । कृपया मां रक्षतु'' इति अवदत् ।

''अभयं दत्तम् अस्ति मया । अतः चिन्तां मा करोतु भवान्'' इति अवदत् ।

एवं वदन् राजानं स्पृष्ट्वा तस्मिन् धैर्यं प्रपूर्य उग्रदण्डः वधकभल्लूकम् अवदत् - ''वधकभल्लूक ! मान्त्रिकसमीपम् एतस्य नयनं मम उत्तरदायित्वम् । भवान् स्ववाहनं कर्तितशुण्डं गजम् आरुह्य राजधानीं प्रति गच्छतु । अहं राज्ञा सह पादाभ्यां चलन् राजधानीम् आगमिष्यामि'' इति ।

''उग्रदण्डवर्य ! भवान् स्ववचनम् अवश्यं परिपालयिष्यति ननु ? अहम् इदानीम् एव एतस्य गजस्य बन्धनार्थम् उपयुक्तां रज्जुं कर्तयिष्यामि'' इति वदन् वधकभल्लूकः ततः प्रस्थितवान् ।

भिल्लतरुणः तस्य पृष्ठतः एव पदानि स्थापयन् अवदत् - ''वधकभल्लूकवर्य ! असावधानः सन् भवान् गजसमीपं मा गच्छतु । वार्तालापे निमग्नाः भवन्तः गजस्य गर्जनं श्रुतवन्तः वा न वा इति न ज्ञायते मया । एतावता सः सिंहः गजस्य कुम्भस्थलं विदारितवान् स्यात् अपि'' इति ।

''एवम् !'' इति साश्चर्यं वदन् वधकभल्लूकः गजस्य दिशि वेगेन धावितवान् । तावता सिंहः गजस्य कुम्भस्थलं विदारयितुम् प्रयत्नम् आरब्धवान् आसीत् । गजः तु स्वस्य

व्रणितां शुण्डां प्रसार्य सिंहं ग्रहीतुं, बन्धनस्य छेदाय च प्रयतमानः असीत् ।

एतत् दृश्यं दृष्ट्वा नितरां क्रुद्धः वधकभल्लूकः – "अये ! दुष्ट ! उद्धतसिंह ! मम वाहनम् एव मारयितुम् उद्युक्तस्य भवतः कियत् धार्ष्ट्यम् ?" इति वदन् स्वस्य परशुम् उन्नीय सिंहस्य दिशि वेगेन धावितवान् ।

सिंहः अपि गर्जन् वधकभल्लूकस्य दिशि आगच्छत् । वधकभल्लूकः सिंहं लक्ष्यीकृत्य स्वस्य परशुं क्षिप्तवान् । सः परशुः तस्य पृष्ठपादे लग्नः ।

एतेन यद्यपि सिंहः भूमौ अपतत्, तथापि अपरस्मिन् एव क्षणे उत्थाय सः वधकभल्लूकस्य संहाराय अग्रे आगच्छत् एव । तावता सिंहस्य उरः लक्ष्यीकृत्य बाणं प्रयुक्तवान् भिल्लयुवकः ।

बाणप्रहारं प्राप्य सिंहः पुनरपि भूमौ अपतत् । घोरं गर्जनं कुर्वन् सः उत्थातुं यदा प्रयतमानः आसीत् तदा वधकभल्लूकः स्वस्य परशुम् उन्नीय तेन सिंहं कण्ठे बलात् प्रहृतवान् ।

एतस्मात् सिंहस्य कण्ठे महाव्रणः जातः । सिंहः पादान् चालयन् प्रतिरोधं कर्तुं प्रयतते स्म । वधकभल्लूकः तं पुनरपि प्रहर्तुं स्वस्य परशुम् उन्नीतवान् । तदा भिल्लतरुणः तस्य हस्तं गृहीत्वा तदीयं प्रयत्नं निवारयन् अवदत् – "अये वधकभल्लूक ! मृतप्रायस्य एतस्य पुनः प्रहरणेन किम् ? पुनः प्रहारेण एतस्य चर्म मा विनाययशयतु भवान् । एतस्य चर्म केसराः च अपेक्ष्यन्ते मया" इति ।

वधकभल्लूकः तं भिल्लयुवकं प्रशंसन्



अवदत् – "मित्र ! भवतः बाणप्रयोगकौशलम् अपूर्वम् । यदि भवान् एकाकी वासं कुर्वन् स्यात् तर्हि मया सह आगच्छतु । राजानम् उक्त्वा अहं भवन्तं सहायकवधकपदे नियोक्ष्यामि" इति ।

भिल्लयुवकः शिरः चालयन् उक्तवान् – "भवतः एषा सूचना युक्ता एव अस्ति । भवतः सहायकत्वेन कार्यकरणं ममापि सम्मतम् एव" इति ।

तावता उग्रदण्डादयः अन्यैः सह तत्र आगत्य अवदन् – "अहो, वधकभल्लूकेन उत्तमः एव सहायकः प्राप्तः अस्ति" इति ।

एतत् श्रुत्वा सन्तोषं प्राप्तवान् वधकभल्लूकः मन्दहासपूर्वकम् अवदत् – "अये नागमल्ल ! भवान् अनुचरैः सह गत्वा मम वाहनभूतस्य गजस्य बन्धनम् अपनयतु" इति ।

"भवतः आज्ञा शिरोधार्या एव मम ।

किन्तु बन्धनस्य अपगमस्य अनन्तरं सः गजः आक्रमणेन अस्मान् पीडयेत् चेत् अस्माभिः किं करणीयम् ? तदा तु वयं प्राणैः वियुक्ताः स्याम खलु'' इति अवदत् नागमल्लः ।

''मम वाहनभूतः सः मदीयाम् आज्ञां विना भवन्तं कथं पीडयेत् ?'' इति वदन् वधकभल्लूकः स्वयं गजस्य समीपम् अगच्छत् । अन्ये गजस्य बन्धनम् अपनीतवन्तः । वधकभल्लूकः गजस्य पृष्ठे उपविष्टवान् ।

यदा बन्धनम् अपगतं तदा गजः झटिति उदतिष्ठत् । वधकभल्लूकः भिल्लयुवकं हस्तसङ्केतेन स्वसमीपम् आहूय अवदत् - ''अये ! युवक ! भवान् अरण्यमार्गं सम्यक् जानाति एव । अतः भवान् एतस्य कुम्भस्थलस्य समीपे उपविशन् चन्द्रशिलां प्रति गमनाय मार्गं दर्शयतु'' इति ।

ततः सः उग्रदण्डं पश्यन् अवदत् - ''राजा दुर्मुखः मध्येमार्गं यथा पलायनं न कुर्यात् तथा कृत्वा राजधानीं प्रति तस्य आनयनं भवतः दायित्वम्'' इति ।

राक्षसः उग्रदण्डः शिरः चालयन् अङ्गीकारं संसूच्य अवदत् - ''भल्लूकमान्त्रिकसमीपे मम एकं कार्यम् अस्ति । अतः अहम् अन्यैः सह पादाभ्याम् आगमिष्यामि । गजम् आरुह्य भवान् अग्रे गच्छतु नाम । ये अस्माभिः सह आगन्तुं न इच्छन्ति ते अरण्यस्य अतिक्रमणस्य अनन्तरम् उद्दिष्टं देशम् उद्दिश्य गन्तुम् अपि अर्हन्ति'' इति ।

''युक्तम् एव उक्तं भवता । राज्ञः दुर्मुखस्य एकस्यैव ग्रहणे तात्पर्यं मम । अन्ये तु स्वतन्त्राः एव । ते अस्माभिः सह आगन्तुं तु अर्हन्ति । अत्रैव वने वासं कर्तुम्, अन्यत्र गन्तुं वापि अर्हन्ति'' इति अवदत् वधकभल्लूकः ।

एतावत् उक्त्वा वधकभल्लूकः अग्रे गमनाय स्वस्य गजं प्रेरितवान् ।

सः कर्तितशुण्डः गजः वेगेन अधावत् । अन्ये सर्वे दृष्टिपथात् दूरं गताः । अत्रान्तरे उभौ गजौ आरुह्य आगताः केचन वधकभल्लूकस्य गमनम् अवरुद्धवन्तः ।

तयोः गजयोः उपरि सैनिकाः आसन् । ते - ''जयतु उदयगिरिमहाराजः'' इति उच्चैः घोषणं कुर्वन्तः वधकभल्लूकं लक्ष्यीकृत्य बाणानां प्रयोगम् आरब्धवन्तः ।

- *(अनुवर्तते)*



## वेताल-कथा

# आत्माभिमानी

प्रारब्धम् उत्तमजनाः न परित्यजन्ति इत्येतां सूक्तिं स्मरन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! कस्य उदात्तस्य लक्ष्यस्य सिद्ध्यर्थं भवान् एवं मध्यरात्रे एतस्मिन् घोरे श्मशाने अटति इति न ज्ञायते । मया तादृशाः बहवः युवकाः दृष्टाः सन्ति, ये च स्वातन्त्र्याय प्राणान् अपि अर्पयितुं सिद्धाः भवन्ति । महान् आवेशः, महत् भाषणम् इत्यादिकं भवति तेषाम् । किन्तु परिस्थितौ अल्पं परिवर्तनं जातं चेत् अपि ते सर्वं शौर्यं विस्मृत्य भीरवः इव एव व्यवहरन्ति । गिरिधरनामकः भिल्लयुवकः एतस्य



प्रत्यक्षम् उदाहरणम् । तस्य कथां श्रावयामि । मार्गायासपरिहाराय तां कथां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

भार्गवखातप्रदेशस्य दलपतिः कोण्डदेवः । तस्य एकमात्रपुत्रः गिरिधरः ।आ बाल्यात् एव तस्मिन् महान् स्वाभिमानः आसीत् । यद्यपि सः दलपतेः पुत्रः, तथापि अहङ्कारः तस्मिन् लेशमात्रेण अपि न आसीत् । पर्वतीयैः युवकैः सह एव सः सदा भवति स्म । सः तान् वदति स्म यत् मनुष्ये आत्माभिमानः अवश्यं स्यात् इति ।

प्रतिवर्षं भार्गवीमातुः पूजा प्रचलति । तदवसरे खड्गयुद्धधनुर्विद्यादिषु विविधाः स्पर्धाः प्रचलन्ति । ये स्पर्धायां जयं प्राप्नुवन्ति तेषां सत्कारः क्रियते ।

तदवसरे गिरिधरः तान् प्रोत्साहयन् वदति स्म - ''स्वजातेः स्वतन्त्रतार्थं सर्वैः अपि युवकैः प्रयासः करणीयः । प्राणान् पणीकर्तुम् अपि सिद्धैः भवितव्यं तैः'' इति ।

तस्य एतादृशानि वचनानि श्रुत्वा भिल्लयुवकाः महता उत्साहेन उच्चैः करताडनं कुर्वन्ति स्म ।

भार्गवखातप्रदेशस्य चतसृषु दिक्षु पर्वताः सन्ति । दक्षिणदिशि खातप्रवेशाय कश्चन मार्गः अस्ति । तस्य अपरस्मिन् पार्श्वे अस्ति काञ्चनपुरम् । काञ्चनपुरस्य राजा कनकसेनः । गिरिधरस्य प्रपितामहकालात् भार्गवखातप्रदेशः काञ्चनपुरस्य सामन्तदेशः अस्ति । ततः पूर्वं तु तत्रत्याः स्वतन्त्राः एव आसन् ।

गिरिधरः कदाचित् पितरम् अपृच्छत् - ''तात ! वयं कथं काञ्चनपुरस्य सामन्ताः जाताः ?'' इति ।

तदा कोण्डदेवः अवदत् - ''तत् किञ्चित् रहस्यम् । तस्य प्रकाशनतः वक्तुः प्राणहानिः भविष्यति । अतः अहं तत् वक्तुं न शक्नोमि'' इति ।

भार्गवीमन्दिरस्य अर्चकः महावृद्धः । गिरिधरः कदाचित् तेन मिलित्वा अवदत् यत् तत् रहस्यं वक्तव्यम् इति । अर्चकस्य मरणं तु आसन्नम् आसीत् एव । अतः सः तत् रहस्यम् उक्त्वा प्राणान् अत्यजत् ।

भार्गवखातप्रदेशः विविधानां फलानां, जीविनां च आश्रयस्थानम् । सर्वविधानि अपि औषधसस्यानि तत्र प्राप्यन्ते स्म । काञ्चनपुरस्य राजा यदा एतत्सर्वं ज्ञातवान् तदा सः सैनिकान् तत्र प्रेषितवान् । ते सैनिकाः खातीयान् जनान्

पुनः पुनः पीडयन्ति स्म । खातीयैः सङ्गृहीतं मधु ते बलात् नयन्ति स्म । गजदन्तान्, व्याघ्रचर्माणि चापि खातीयेभ्यः वशीकृत्य नयन्ति स्म । एषा विपत्तिः कथं निवारणीया इति खातीयैः न ज्ञातम् ।

प्रतिवर्षे इव तस्मिन् अपि वर्षे भार्गवीदेव्याः उत्सवः आगतः । तम् उत्सवं द्रष्टुं केचन सैनिकाः, काञ्चनपुरस्य कश्चन दलपतिः च आगतः ।

यदा भार्गवीदेव्याः पूजा प्रचलति स्म तदा अर्चकः भूताविष्टः जातः । सः उच्चैः अवदत् - ''यदि खातीयाः जनाः सकुशलं स्थातुम् इच्छन्ति तर्हि मम आदेशम् अवश्यं पालयेयुः'' इति ।



तदा भिल्लनायकः अवदत् - ''अम्ब ! भवती यत् आदिशति तत् अवश्यं करिष्यामः अम्ब ! किं करणीयम् इति कृपया आदिशतु'' इति ।

''इतः आरभ्य प्रतिपूर्णिमादिनं त्रिभाण्ड-मितं मधु, हरिणस्य एकविंशतिः शृङ्गाणि, एकविंशतिः गजदन्ताः, कण्डोलत्रयमितानि औषधीयमूलानि च मम पुरतः भवन्तः स्थापयेयुः । तत् सैनिकाः नयेयुः । यावत् महाराजः एतं नियमं न परिवर्तयिष्यति तावत् एषः व्यवहारे स्थास्यति । यदि एतस्य नियमस्य भङ्गः भविष्यति तर्हि भवतां हानिः निश्चिता'' इति अवदत् अर्चकः ।

''यथा भवती आदिशति तथा करिष्यामः अम्ब'' इति विनयेन शिरः अवनमय्य अवदत् भिल्लनायकः ।

तस्मात् दिनात् भार्गवखातीयः प्रदेशः काञ्चनपुरस्य अधीनः जातः । तस्मात् सैनिकैः क्रियमाणा पीडा तु स्थगिता । किन्तु परिश्रमेण सञ्चितानि मध्वादीनि प्रतिपूर्णिमादिनं राज्ञे अर्पणीयानि अभवन् तैः ।

एषा पद्धतिः गिरिधराय न अरोचत । सः भिल्लतरुणानां पुरतः अवदत् - ''वनमाता यत् ददाति तत् सैनिकेभ्यः समर्प्य वयं कष्टेन जीवन्तः स्मः । एतत् दास्यम् इतोऽपि कियत्कालम् अनुवर्तेत ? वयं सर्वे सम्भूय सैनिकान् सम्मुखीकरवाम । किम् एतत् न शक्येत ?'' इति ।

''अग्निना क्रीडा न उचिता वत्स ! राज्ञः सेनायाः महत् सामर्थ्यं भवति । तस्याः सम्मुखीकरणाय अस्माकं तरुणानां सामर्थ्यं नास्ति'' इति पुत्रम् अबोधयत् कोण्डदेवः ।



गिरिधरः कदाचित् पितरम् अवदत् - ''अहं राजधानीं गत्वा राजानं दृष्ट्वा अस्माकं [illegible]शं निवेदयिष्यामि'' इति ।

''राजा यदि अस्माकं प्रार्थनां पुरस्कुर्यात् तर्हि सर्वाः समस्याः परिहृताः इव । विनयेन राजानं सर्वं वदतु भवान्'' इति अवदत् कोण्ड-देवः ।

अनन्तरदिने एव गिरिधरः द्वाभ्यां मित्राभ्यां सह राजधानीं गत्वा राजानं दृष्ट्वा स्वस्य कष्टं निवेदितवान् ।

सर्वं श्रुत्वा महाराजः अवदत् - ''भार्गव-खातीयः प्रदेशः अस्माकं सामन्तदेशः । तस्य पूर्णः अधिकारः अस्माकम् । यदि भवन्तः करं दातुं न इच्छन्ति तर्हि खातं परित्यज्य गच्छन्तु'' इति ।

''भार्गवखातप्रदेशः अस्माकं जन्मभूमिः । तां परित्यज्य गमनं सर्वथा असाध्यम् । एतत् वयं स्वप्ने अपि न चिन्तयितुम् अर्हामः'' इति उक्त्वा ततः निर्गतवान् गिरिधरः ।

ततः सप्ताहः अतीतः । कदाचित् राजा आस्थाने आसीनः आसीत् । तदा कश्चन भिल्लयुवकः आस्थानं प्रविश्य राज्ञे एकं पत्रं दत्तवान् ।

तस्मिन् पत्रे लिखितम् आसीत् - ''राजन् ! बहुभ्यः वर्षेभ्यः पूर्वं भूताविष्टस्य अर्चकस्य वचनात् भीताः खातीयाः जनाः यत् वचनं दत्तवन्तः तत् पालयन्तः स्मः वयम् । तस्मात् दिनात् करं यच्छन्तः स्मः, कष्टानि अनुभवन्तः स्मः च । मया आगत्य यत् निवेदनं कृतं तत् निराकृतं भवता । एषः तु दौर्भाग्यस्य विषयः । अतः इदानीं वयम् अस्मत्प्रदेशं स्वतन्त्रं घोषितवन्तः स्मः । अस्माकं जनाः भवतः सेनां सम्मुखीकर्तुं सिद्धाः सन्ति एव । ते प्राणान् पणीकृत्य युद्धं कर्तुं सिद्धाः । किन्तु अहं रक्तपातस्य विरोधी । अतः अहम् एकं निवेदनं करोमि । भिल्लानां प्रतिनिधिः सन् अहं भवतः मल्लैः सह मल्लयुद्धं करिष्यामि । खड्गयुद्धम् अपि भवतु । यदि तत्र मम जयः स्यात् तर्हि अस्मत्प्रदेशस्य स्वातन्त्र्यं पुरस्करणीयं भवता । यदि मम पराजयः स्यात् तर्हि वयं सर्वे खात-प्रदेशं परित्यज्य गमिष्यामः । मम विश्वासः अस्ति यत् भवान् अस्माकं विज्ञप्तिं पुरस्करिष्यति इति । मल्लयुद्धादिकं कदा कुत्र च भवतु इति सूचयतु'' इति ।

एतत् पत्रं गिरिधरेण लिखितम् आसीत् । पत्रं पठित्वा राजा नितरां क्रुद्धः । तस्य भ्रुकुटी वक्रे जाते ।

तथापि कोपं निगृह्य सः तं भिल्लयुवकम् अवदत् - ''अग्रिमे पूर्णिमादिने राजधान्याः राजाङ्गणे एतदर्थं व्यवस्था करिष्यते मया । इतः प्रतिगत्य भवान् एतं विषयं गिरिधरं वदतु'' इति ।

पूर्णिमादिनम् उपस्थितम् । गिरिधरः मित्राभ्यां सह राजाङ्गणम् आगतवान् । यदा सः राजाङ्गणे पदं स्थापितवान् तदा केचन सैनिकाः आगत्य तं बन्दीकृतवन्तः ।

एताम् अनिरीक्षितां घटनां दृष्ट्वा गिरिधरः आश्चर्यचकितः । सः क्रोधपूर्णया दृष्ट्या राजानम् अपश्यत् ।

तदा राजा अवदत् - ''अये, गिरिधर ! भवतः साहसप्रवृत्तिः श्लाघनार्हा एव । भवान् राजविरोधं कृत्वा स्वप्राणान् अपायगर्ते पातितवान् । कण्टकं कण्टकेन एव अपसारणीयम् इति तु रणनीतिः । ये निश्चिन्तजीवनं यापयन्तः आसन् तेषां हृदये भवान् स्वाभिमानं स्वतन्त्रताभावं च पूरितवान् । तान् राजविरोधकार्ये प्रेरितवान् भवान् विद्रोही अस्ति । एतस्य अक्षम्यस्य अपराधस्य निमित्तं शिरश्छेदः एव योग्यः दण्डः । भवान् यथा रक्तपातविरोधी अस्ति तथैव अहमपि रक्तपातविरोधी अस्मि इत्यतः मया कश्चन अन्यः एव मार्गः चिन्तितः । भार्गवखातस्थानां मनसि स्वातन्त्र्यप्रियता उद्बुद्धा अस्ति । तान् वशे स्थापयितुं न शक्नोमि अहम् । सेना अपि तान् निग्रहीतुं न शक्नुयात् । अतः अहं तेषां स्वतन्त्रतां पुरस्कर्तुम् इच्छामि । किन्तु तदर्थं भवता मया सूच्यमानः कश्चन विशिष्टः नियमः पालनीयः भविष्यति'' इति ।

''सः नियमः कः इति भवान् वदतु ।



तस्य श्रवणस्य अनन्तरं पालनं शक्यते वा न वा इति अहं वदिष्यामि'' इति अवदत् गिरिधरः ।

''स्वस्य जन्मभूमेः स्वतन्त्रतार्थं भवता एतस्मिन् राजभवने आजीवनं दास्यम् अनुभोक्तव्यम् । अत्रत्यानां परिचर्यां कुर्वता भवता दिनानि यापनीयानि आजीवनम् । किम् एतत् अनुमन्यते भवता ?'' इति गिरिधरम् अपृच्छत् राजा ।

एतं नियमं श्रुत्वा गिरिधरः क्षणकालं स्तब्धः । द्वित्रक्षणानन्तरं सः अवदत् - ''महाराज ! भवतः नियमं हृत्पूर्वकम् अङ्गीकरोमि अहम्'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! गिरिधरः आ बाल्यात् स्वाभिमानी एव आसीत् । तथापि आजीवनं दास्यं किमर्थम् अङ्गीकृतं तेन ? किं प्राणापायभीतिं प्राप्य सः एतादृशं निर्णयं कृतवान् ? स्वाभिमानस्य त्यागः किमर्थं चिन्तितः तेन ? कष्टस्थितौ एव मानवस्य परीक्षा भवति । किमर्थं गिरिधरः तादृश्यां परीक्षायाम् अनुत्तीर्णः जातः ? स्वाभिमानः किमर्थं तस्मिन् लुप्तः ? सर्वम् एतत् विचित्रम् एव खलु ? मम एतेषां प्रश्नानाम् उत्तरं जानन् यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''गिरिधरस्य स्वभावपरिवर्तनं तु न जातम् । तस्य जीवितलक्ष्यम् आसीत् यत् मातृभूमेः स्वतन्त्रता कल्पनीया इति । अन्ते तेन तत् लक्ष्यं साधितम् अपि । एतस्य साधनार्थं सः प्राणान् अर्पयितुम् अपि सिद्धः एव आसीत् । एवं स्थिते व्यक्तिगतः स्वाभिमानः तेन अर्पितः यत् तत्र किम् आश्चर्यम् ? 'त्यजेदेकं कुलस्यार्थे' इति प्राचीनोक्तिः प्रसिद्धा अस्ति एव । देशस्य हितार्थम् आत्मनः अभिमानस्य समर्पणं यत् तेन कृतं तत् तदीयाम् उदात्तताम् एव द्योतयति । अतः सः जीवनपरीक्षायां न अनुत्तीर्णः, प्रत्युतः जीवने यत् सर्वश्रेष्ठम् इति भावितं तदेव समर्पयिता तेन विशिष्टश्रेणी आसादिता । प्रशंसनीयं कृत्यं तस्य'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# यदि शिक्षकाः दीपायेरन्...

एषा घटना अस्मद्देशस्य राष्ट्रपतेः ए.पि.जे. अब्दुल्कलामस्य जीवनतः उद्धृता । भारतस्य स्वातन्त्र्यस्य अनन्तरम् अधिकः कालः अतीतः न आसीत् । पञ्चायतसभायाः निर्वाचनम् आसन्नम् आसीत् । कलामस्य पिता जनाब् अबुल् फकीर जैनुलाबदीनः रामेश्वरप्रदेशतः चितः आसीत् । तस्यैव अध्यक्षपदप्राप्तिः निश्चितप्राया आसीत् । सः चितः आसीत् यत् तत्र कारणं तदीया योग्यता एव, न तु जातिः आर्थिकस्थितिः वा ।



अथ कदाचित् अब्दुल्कलामः दीपस्य पुरतः उपविश्य पठन् आसीत् । तदा द्वारताडनशब्दः कश्चत श्रुतः । कलामः द्वारम् उद्घाटितवान् । कश्चित् आगन्तुकः अन्तः आगतवान् । सः कलामम् अवदत् यत् अहं भवतः पित्रे कमपि बन्धं दातुम् इच्छामि इति । तदीयः पिता सायङ्कालीनप्रार्थनार्थं गतः आसीत् । माता अपि प्रार्थनार्थं गता आसीत् । अतः कलामः अवदत् यत् बन्धं मञ्चस्य उपरि स्थापयित्वा गच्छतु भवान् इति । आगन्तुकेन तथैव कृतम् ।

प्रार्थनामन्दिरतः प्रत्यागतः पिता मञ्चस्थं बन्धं दृष्ट्वा अपृच्छत् – ''किम् एतत् ? केन स्थापितम् अत्र ?'' इति ।

''कश्चित् आगत्य एतदत्र स्थापयित्वा गतवान्'' इति अवदत् कलामः । पितां तं बन्धम् उद्घाटितवान् । बन्धे महार्घा वेष्टी, शङ्खं, फलानि, मधुरभक्ष्याणि, काचित् चिटिका च आसन् । एतत्सर्वं दृष्टवान् पिता नितरां क्रुद्धः सन् पुत्रं बहुधा ताडितवान् । तदा तस्य पत्नी तत्र आगत्य – 'यत् प्रवृत्तं तत्र एतस्य पात्रं नास्ति' इति वदन्ती ताडनं निवारितवती । तदा पिता एकं पद्यम् उदाहरन् अवदत् – ''भगवान् एव कश्चित् कस्याश्चित् स्थितौ स्थापयति । तस्मै यद्यत् आवश्यकं तत्सर्वं स एव व्यवस्थापयति । तस्मात् अतिरिक्तं यदि किमपि स्वीक्रियते तर्हि तत् पापाय । एतादृशम् उपायनं केनचित् स्वार्थेन दीयते । अतः एतादृशस्य स्वीकारः पापाय'' इति ।

अब्दलूकलामः पितुः एतेन व्यवहारेण न रुष्टः । प्रत्युत 'मया उत्तमा नीतिः प्राप्ता अद्य'

इति अचिन्तयत् सः । एषा घटना तस्य मनसि स्थिरतया अतिष्ठत् ।

अन्या काचित् घटना तदीयस्य जीवनस्य दिशाम् एव पर्यवर्तयत् । सः यदा अष्टम-कक्ष्यायाम् आसीत् तदा प्रवृत्ता घटना एषा । सुब्रह्मण्यैय्यर्नामकः कश्चन अध्यापकः आसीत् तस्य । अब्दुल्कलामस्य दृष्ट्या अत्युत्तमेषु अध्यापकेषु अन्यतमः सः ।

कदाचित् सः 'पक्षिणः कथं डयन्ते' इति पाठयन् आसीत् । सः कृष्णफलके कश्चित् पक्षिणम् अलिखत् । पक्षपुच्छशिरश्शरीरादयः



सम्यक् लिखिताः तेन । पक्षिणः कथं शरीरम् उन्नयन्ति, कथं डयन्ते, डयनकाले एव दिक्परिवर्तनं कथं कुर्वन्ति, पक्षचालनं विनैव कथं डयन्ते इत्यादिकं सः विवृतवान् । बालाः सश्रद्धं तस्य कथनं शृण्वन्तः आसन् । कक्ष्यायाः अन्ते सः अपृच्छत् - ''पक्षिणः कथं डयन्ते इति किं ज्ञातम् ?'' इति । कक्ष्यायां क्षणकालं मौनं प्रसृतम् । ततः अब्दुल्कलामः उत्थाय अवदत् - ''मया स्पष्टतया न अवगतम्'' इति । अध्यापकः अन्यान् छात्रान् अपश्यत् । तेषां मुखे अपि अनवगतिभावः एव दृश्यते । एतस्मात् अध्यापकः न खिन्नः, न वा क्रुद्धः । सः अवदत् - ''सायं वयं समुद्रतीरं गच्छाम ।''

सायं समुद्रतीरे तैः निश्चलतया आकाशे डयमानाः पक्षिणः अदृश्यन्त । तेषां पक्षचालनं कथं भवति, पुच्छबलेन तैः कथं गमनदिक् परिवर्त्यते इत्यादीन् सः पुनः विवृतवान् । पक्षिणां गतिम् अनुकृत्य एव विमाननिर्माणं कृतम् इत्यपि सः अवदत् । ततः प्रत्यागमनसमये सर्वे बालाः विमानसञ्चारस्य विषये किञ्चित् ज्ञानं प्राप्तवन्तः आसन् । एषः प्रात्यक्षिकः पाठः आसीत् । यत् घण्टाभ्यन्तरे अपि विवरीतुं न शक्तम् आसीत् तत् पाद-घण्टाभ्यन्तरे एव समुद्रतीरे अवगमितम् आसीत् अध्यापकेन । अब्दुल्-कलामः वदति - 'शिवसुब्रह्मण्यैय्यरः कश्चन बद्धश्रद्धः अध्यापकः' इति ।

ततः गृहं प्रत्यागतः अब्दुल्-कलामः निरचिनोत् यत् यदि अवसरः प्राप्येत तर्हि मया विमान-निर्माणतन्त्रज्ञानम् एव अध्येतव्यम् इति । स्वजीवनस्य दिशां सः तदैव निर्णीतवान् आसीत् इति यदि वदेम तर्हि नात्युक्तिः सा । केषाञ्चित् वर्षाणाम् अनन्तरं सः मद्रास् इनस्टिट्यूट् आफ् टेक्नालजी नामिकां संस्थां यदा प्रविष्टवान् तदा वैमानिकशास्त्रम् एव अध्ययनस्य मुख्यविषयत्वेन चितवान् । एवं यदा सः त्रयोदशवर्षीयः आसीत् तदैव तदीयस्य जीवनस्य दिक् निश्चिता आसीत् ।

डि. आर्. डि. ओ. इत्यस्याः संस्थायाः वैमानिकाभिवृद्धिविभागे १९५८ तमे वर्षे



बेङ्गलूरुनगरे आसीत् अब्दुल्कलामः । तदा प्रवृत्ता घटना एषा । तत्समये कलामवर्यः बाह्याकाशनौकायाः निर्माणे रतः आसीत् । अर्धभ्रमणपुरस्सरं विमानं प्रेरयितुं समर्थस्य यन्त्रविभागस्य आवश्यकता आसीत् तत्र । सः तस्य निर्माणं न जानाति स्म । अन्यविधस्य अभिप्रेरकयन्त्रभागस्य निर्माणं जानाति स्म सः । अधिकारिभिः सूचितं यत् भारतीय-विज्ञानभवने कार्यं कुर्वतः डा॰ सतीशधवन-वर्यस्य मार्गदर्शनम् अत्र लाभाय स्यात् इति । तस्मिन् काले धवनवर्यः वैमानिकसंशोधनक्षेत्रे ख्यातनामा आसीत् ।

उच्चाधिकारिणः अनुज्ञां प्राप्य कलामवर्यः धवनवर्य-समीपं गत्वा स्वस्य समस्यां न्यवेदयत् । तदा डा॰ धवनवर्यः अवदत् - ''यदि प्रतिसप्ताहं शनिवासरे मत्समीपम् आगम्येत तर्हि षण्मासाभ्यन्तरे अहं तादृशस्य अभिप्रेरकयन्त्रभागस्य निर्माणतन्त्रज्ञानं बोधयितुं शक्नुयाम्'' इति । डा॰ कलामवर्येण एतत् अङ्गीकृतम् । ततः धवनवर्यः सुपरिष्कृतां पाठ्ययोजनां सज्जीकृतवान् । पूरकसाहित्यम् अपि सज्जीकृतानि तेन । कक्ष्यां प्रति आगमनात् पूर्वं किं किं पुस्तकं पठनीयम् इत्यापि सः सूचयति स्म । तावदेव न, प्रतिसप्ताहं यदा कक्ष्यारम्भः भवति तदा सः कलामवर्येण कियत् ज्ञातम् इति विविधैः प्रश्नैः अवगच्छति स्म । कलामवर्यः वदति - 'उत्तमः बोधकः एव एतादृशं परिश्रमं वोढुम् अर्हति' इति । षण्णां सप्ताहानाम् अनन्तरं कलामवर्यः आत्मना अपेक्षितस्य यन्त्रभागस्य निर्माणसम्बद्धं तन्त्रज्ञानम् आसादितवान् ।

अनन्तरकाले यदा डा॰ धवनवर्यः 'इस्रो' (इण्डियन् स्पेस् रिसर्च् आर्गनैसेषन्) संस्थायाः मुख्यः आसीत् तदा एस्.एल्.वि.सरण्याः रोहिणीनामिकायाः बाह्याकाशनौकायाः निर्माणे सहभागिताप्राप्तेः अवसरम् अपि कलामवर्यः प्राप्तवान् आसीत् । गतानि दिनानि स्मरन् आत्मना पितुः सकाशात् मानवीयमौल्यानि कथं प्राप्तानि इति, शिवसुब्रह्मण्यसदृशः अध्यापकः कथं छात्राणाम् अनुकरणपात्रतां वोढुं शक्नोति इति, अध्यापनसमये या सुपरिष्कृतता अवलम्ब्येत सा अध्येतरि आत्मविश्वासम् आत्मशक्तिं च वर्धयति इति च अस्मान् स्मारयति । यदि शिक्षकाः दीपायेरन् तर्हि ते अनेकान् दीपान् प्रवर्तयेयुः ।



*(आकाशवाणीभाषणात् उद्धृतम्)*




## ताजभवनस्य ३५० वर्षाणि !

आगरास्थं ताजभवनं जगतः सप्तसु आश्चर्यकरेषु विषयेषु अन्यतमम् । एतत् शाहजहानेन ३५० वर्षेभ्यः पूर्वं निर्मितम् । एतत् २४४ पादौन्नत्ययुक्ता अस्ति । सामान्यदर्शनात् प्रायः एतत् औन्नत्यं केनापि न परिलक्ष्यते । देहलीस्थं कुतुब-मिनार् जगति एव अत्युन्नतभवनशिखरत्वेन परि-गण्यते । तत् ताजभवनस्य निर्माणस्य चतुश्शत-वर्षेभ्यः पूर्वं निर्मितम् । तस्य औन्नत्यादपि ४ फूट् अधिकम् अस्ति ताजभवनस्य औन्नत्यम् । ताजभवनस्य चतसृषु अपि भित्तिषु अरेबिक्लिप्या कुरानग्रन्थस्थाः विषयाः लिखिताः सन्ति । ताजभवने स्थितस्य मुम्ताज्गोपरं सुवर्णपटलेन विभूषितम् आसीत् । किन्तु शत्रवः नयेयुः इति भीत्या चक्रवर्ती तं सुवर्णपटलम् अपनीय चन्द्रकान्तशिलाः तत्र स्थापितवान् । तदनन्तरकाले अधिकारसूत्रं गृहीतवान् औरङ्गजेबः सैन्यव्ययस्य निर्वहणाय तत् सुवर्णं विक्रीतवान् । अद्य वयं तत्र लतापर्णादिभिः चित्रैः विभूषितान् पटलान् पश्यामः ।



## जागतिकस्तरे ख्याता पादयात्रा !

भारतस्वातन्त्र्यसङ्ग्रामे महात्मगान्धिवर्यस्य नायकत्वे प्रवृत्ता दाण्डीयात्रा अतिप्रमुखा । एषा एव यात्रा जागतिकस्तरे अपि ख्याता इति किं भवन्तः जानन्ति ? २५ दिनानि यावत् प्रवृत्तया एतया असहकारयात्रया सदृशी यात्रा अन्या नास्ति जगति । १९३० तमे वर्षे मार्च्मासस्य १२ दिनाङ्कतः एप्रिल्मासस्य ५ दिनाङ्कं यावत् साबरमतीतः दाण्डीपर्यन्तं ३८८ कि.मी. यावत् गान्धिवर्येण, ७८ अनुयायिभिः च एषा पादयात्रा कृता आसीत् तदा ।





# अमरपाण्डेयस्य ज्योतिषम्

समीरपुरे अमरपाण्डेयः नाम कश्चन ज्योतिषिकः आसीत् । जातकफलं ज्ञातुम् इच्छतां जन्मकुण्डलीं दृष्ट्वा सः भविष्यफलं वदति स्म । येषां जन्मकुण्डली नास्ति, तेषां जन्मनक्षत्रस्य आधारेण जन्मकुण्डलीं निर्माय फलं वदति स्म सः । येषां जन्मनक्षत्रजन्मसमयादिकम् अपि न ज्ञायते तेषां भविष्यं तु सः वराटिकाधारेण कथयति स्म । यदा भविष्यफलम् उच्यते तदा दुष्टफलनिवारणाय काचित् वा ग्रहशान्तिः तेन सूच्यते स्म एव । ग्रहशान्तिकारणाय अपि धनं स्वीकरोति स्म सः ।

वस्तुतः ज्योतिषशास्त्रे अमरपाण्डेयस्य ज्ञानम् अल्पम् एव । तेन उक्तं सर्वं सत्यं न भवति स्म । यदा तेन कथितं मिथ्या भवति तदा केचन विरोधं कुर्वन्ति स्म । किन्तु मधुरैः वचनैः तान् शान्तान् करोति स्म अमरपाण्डेयः ।

भास्करपाण्डेयः अमरपाण्डेयस्य दूरबन्धुः । कदाचित् तौ विपण्याम् अकस्मात् मिलितौ ।

तदा भास्करपाण्डेयः अवदत् - ''भोः, भवान् ज्योतिषशास्त्रे पण्डितः इति भावितम् आसीत् मया । षण्मासाभ्यन्तरे मम पुत्र्याः विवाहः सम्पत्स्यते इति भवता उक्तम् आसीत् । किन्तु तदनन्तरं वर्षम् अतीतं चेदपि मम पुत्र्याः विवाहः तु न सम्पन्नः एव । मम बन्धुः सन्नपि भवान् मिथ्याफलं वदन् मत्तः प्रभूतं धनं स्वीकृतवान् । वस्तुतः तु भवान् ज्योतिषिकः एव न'' इति ।

तदा क्रुद्धः अमरपाण्डेयः अवदत् - ''मां किं सामान्यं जनं मन्यते भवान् ? काश्यां महापण्डितस्य सकाशात् एव मया ज्योतिषम् अधीतम् । प्रतिमासं शतशः जनाः मत्तः जातकफलं जानन्ति । सर्वे मां बहुधा प्रशंसन्ति अपि । एतादृशस्य ममैव ज्योतिषज्ञानं नास्ति इति कथयतः भवतः कियत् धार्ष्ट्यम् ? भवता स्वपुत्र्याः या जन्मकुण्डली दत्ता तत्रैव दोषः

भामहः



स्यात् । तथा सति मम को वा दोषः तत्र ?'' इति ।

''भोः, मम पुत्र्याः जन्मकुण्डली भवता एव रचिता आसीत्'' इति स्मारितवान् भास्करपाण्डेयः ।

''एवं तर्हि भवान् तस्याः जन्मनक्षत्रं यत् उक्तवान् तत्रैव दोषः स्यात् । जन्मसमय-कथनसमये अल्पः दोषः जायते चेत् अपि ग्रहफलम् अन्यत् एव भवति । एतादृशान् सूक्ष्मान् अंशान् अल्पज्ञः भवान् कथं ज्ञातुं शक्नुयात् ? मां निन्दन् भवान् एव महामूर्खः । गच्छ रे इतः'' इति निन्दितवान् अमर-पाण्डेयः ।

भास्करपाण्डेयः मौनेन ततः गतवान् । एवम् अमरपाण्डेयः धाष्ट्येन विनयेन वा जनानां मुखस्य पिधानं करोति स्म । केचन तु स्वगतं वदन्ति स्म - ''प्रायः अस्माकम् एव दौर्भाग्यम् । एतदर्थम् अन्यस्य निन्दनेन किम् ?'' इति ।

ज्योतिषिकथनव्याजेन अमरपाण्डेयः जनेभ्यः प्रभूतं धनं स्वीकुर्वन् अस्ति इति वार्ता गुप्तचरद्वारा भूस्वामिना अपि ज्ञाता । वस्तु-स्थितिः का इति कथं ज्ञातव्यम् इति चिन्तनम् आरब्धवान् भूस्वामी ।

एतेषु एव दिनेषु कश्चन राजप्रतिनिधिः देशे सञ्चारं कुर्वन् समीरपुरम् अपि आगतवान् । भूस्वामी तम् अमरपाण्डेयस्य कपटव्यवहारं श्रावयित्वा अवदत् - ''एतस्य कपटज्योतिषस्य कारणतः न केवलम् अस्माकं ग्रामस्य जनाः, अपि तु पार्श्वग्रामस्थाः अपि बहवः जनाः वञ्चिताः जायमानाः सन्ति । एतस्य कपट-व्यवहारः कथं स्थगनीयः इत्येव न ज्ञायते मया'' इति ।

तदा राजप्रतिनिधिः किञ्चित् चिन्तयित्वा एतदर्थं कञ्चित् मार्गं सूचितवान् । तस्य सूचनाम् अङ्गीकृतवान् ग्रामप्रमुखः ।

तदनन्तरदिने एव मध्यरात्रे केचन चोराः अमरपाण्डेयस्य गृहं प्रविश्य तत्रत्यानि सर्वाणि आभरणानि धनराशिं च अपहृत्य पलायित-वन्तः ।

प्रातःकाले एषा वार्ता सर्वत्र प्रसृता । केचन एतां वार्तां श्रुत्वा सन्तुष्टाः अपि । 'अन्याय्येन मार्गेण सम्पादितस्य धनस्य एतादृशी एव गतिः' इति उक्तवन्तः ते ।

अन्ये केचन उक्तवन्तः - 'यः भूत-भविष्यद्वर्तमानादीनि जानाति सः कथं वा

स्वगृहे चौर्यं भवेत् इति अंशं न ज्ञातवान् ?' इति ।

अनन्तरदिने भूस्वामी भटद्वारा वार्तां प्रेषितवान् यत् भवता मम गृहं प्रति आगन्तव्यम् इति ।

अमरपाण्डेयः अचिन्तयत् - 'प्रायः चोरः गृहीतः स्यात् । मदीयानि आभरणानि प्रत्यर्पयितुम् एव भूस्वामी वार्तां प्रेषितवान् स्यात्' इति । अतः सः सन्तोषेण एव भूस्वामिगृहं गतवान् ।

तस्मिन् समये भूस्वामी अन्यैः कृषिकैः सह उपविश्य सम्भाषणं कुर्वन् आसीत् । यदा अमरपाण्डेयः उपस्थितः तदा भूस्वामी तं नखशिखान्तं दृष्ट्वा अपृच्छत् - ''अमरपाण्डेयवर्य ! भवान् सर्वेषां जातकस्य फलं वदति । ग्रहगतिं सम्यक् जानाति अपि । कस्य जीवने किं भविष्यति इत्यपि वदति । एवं स्थिते स्वगृहे चौर्यं भवेत् इति कथं न ज्ञातं भवता ?'' इति ।

तदा स्खलद्वचनः अमरपाण्डेयः अवदत् - ''श्रीमन् ! चौर्यं भवेत् इति मया पूर्वदिने एव ज्ञातम् आसीत् । तथापि, यत् भवेत् तत् अवश्यं घटेत इति चिन्तयित्वा मया मौनम् आश्रितम्'' इति ।

एतत् श्रुत्वा भूस्वामी कठोरस्वरेण अवदत् - ''यदि भवता उच्यमानं सत्यं तर्हि भवता अपराधद्वयं कृतम् इति स्पष्टम् । चौर्यं भवेत् इति जानन् अपि मौनम् आश्रितवान् भवान् अप्रत्यक्षरूपेण चोरस्य साहाय्यं कृतवान् । एषः प्रथमः अपराधः । अपरः अपराधः तु



- यत् भवेत् तत् भविष्यति एव इति जानन् अपि भवान् ज्योतिषनाम्ना जनान् वञ्चितवान् । ततः महत् धनं सम्पादितं भवता । एवं ननु ?'' इति ।

एतत् सत्यम् इति अनन्यगतिकतया अङ्गीकृतवान् अमरपाण्डेयः शिरश्चालनेन । तत्र स्थिताः सर्वे एतत् दृष्ट्वा उच्चैः हसितवन्तः ।

भूस्वामी मन्दहासपूर्वकं पुनः अवदत् - ''भवतः ज्योतिषज्ञानं तु अकिञ्चित्करं सम्पन्नम् । तथापि भवान् भाग्यवान् एव । परह्यः राजप्रतिनिधिः कश्चन आगतवान् आसीत् । सः काश्यां ज्योतिषशास्त्रस्य विशेषाध्ययनं कृतवान् आसीत् । सः चौर्यसम्भावनां ज्ञात्वा ग्रामरक्षकान् सूचितवान् आसीत् यत् जागरूकतया स्थातव्यम् इति । एतस्मात् रक्षकभटाः जागरूकाः जाताः । भवतः गृहे चौर्यं कृत्वा पलायमानान् चोरान् दृष्ट्वा ते तान् ग्रहीतुं महान्तं प्रयत्नं कृतवन्तः । तथापि ते तेषां चोराणां ग्रहणे असमर्थाः जाताः । चोराः तु चोरितानि वस्तूनि मार्गे क्षिप्त्वा ततः पलायितवन्तः'' इति ।

''एवं तर्हि मम धनाभरणादीनि भवत्सकाशे सन्ति ! सर्वं भवतः दयया सम्पन्नम्'' इति अवदत् अमरपाण्डेयः ।

''भवदीयां सम्पत्तिं नयतु इदानीम् । किन्तु इतः परं कपटज्योतिषव्यवहारः भवता स्थगनीयः । यत् धनम् अस्ति तेन कृषिः वाणिज्यं वा करणीयम्'' इति सूचितवान् भूस्वामी ।

''श्रीमन् ! भवतः आज्ञा शिरोधार्या मम । इतःपरं ज्योतिषवृत्तिं न करिष्यामि इति सर्वेषां पुरतः इदानीं शपथं करोमि'' इति अवदत् अमरपाण्डेयः ।

तदा भूस्वामी उपस्थितान् जनान् उद्दिश्य अवदत् - ''भविष्यस्य विषये भयम् आतङ्कः च यावत् भविष्यति तावत् एतादृशाः अमरपाण्डेयसदृशाः अस्मान् वञ्चयेयुः एव । अद्य अमरपाण्डेयः तां कपटवृत्तिं त्यजति चेत् श्वः तत्स्थाने अपरः आगत्य अस्मान् वञ्चयेत् । अतः अस्माभिः जागरूकैः भाव्यम् । एषः एकः एव प्रगतेः निमित्तं स्थितः उत्तमः मार्गः'' इति ।



# वार्ताविषयतां गताः बालाः



## अमेरिकामेरथान्धावने भारतीयस्य जयः

पञ्चदशवर्षीयः गौतमपेरी क्यालिफोर्नियाराज्ये स्यानोसेनगरे स्थितस्य माध्यमिकविद्यालयस्य छात्रः । सः 'सान्फ्रान्सिस्को क्रानिकल् मेरथान्'स्पर्धायाम् ऊननवदशवर्षीयाणां गणे चतुर्थं स्थानं प्राप्तवान् । तस्यां स्पर्धायां १९०० बालाः भागं गृहीतवन्तः आसन् । तेषु अत्यल्पवयस्केषु अयं द्वितीयः । गौतमः ४७ कलाभिः ४६ घण्टाभिः च युक्तेन घण्टात्रयात्मकेन कालेन लक्ष्यं प्राप्तवान् । अत्यल्पवयस्कः तु १२ वर्षीयः बालः ।

एतस्य गौतमस्य कुटुम्बं हैदराबादतः निर्गत्य अमेरिकादेशे वसति इदानीम् । धावनस्पर्धायां विशेषरुचिः गौतमस्य । प्रथमायां मेरथान्धावनस्पर्धायां भागग्रहणस्य अनन्तरं गौतमेन उक्तम् - ''मया इदानीं विशेषतृप्तिः प्राप्ता अस्ति । मम अग्रिमं लक्ष्यं तु ३.१५ घण्टाभिः एव एतत् दूरं क्रमणीयम् इति । २० मैलुदूरं क्रमणीयं भवति । एतावता कालेन तावतः दूरस्य क्रमणं कष्टसाध्यम् एव अस्ति । तथापि अग्रिमेषु केषुचित् वर्षेषु एतत् लक्ष्यं साधयिष्यामि एव अहम्'' इति ।

गौतमः तेलुगुभाषया प्रकाशितस्य साहित्यस्य पठने प्रवृत्तिमान् अस्ति । सः चन्दमामायाः तेलुगु-आवृत्तेः अपि नियतवाचकः अस्ति ।

## पदगताक्षरकथनस्पर्धा

गते जून्मासे वाशिङ्ग्टन्नगरे ७७ तमं 'नेषनल् स्पेल्लिङ्ग्बी' आयोजितम् आसीत् । अत्र कोलराडोस्थः अष्टमकक्ष्यीयः भारतीयमूलः अक्षयबुद्धिगः द्वितीयं स्थानं प्राप्तवान् । एकस्य पदस्य अक्षराणां कथनावसरे दोषः कृतः इत्यतः सः द्वितीयः जातः । प्रथमं स्थानं प्राप्तं चतुर्दशवर्षीयेण डेविड् टिड्भर्नामकेन । प्रथमं पारितोषिकं १२,००० अमेरिकीयडालरात्मकम् आसीत् ।



२००२ तमे वर्षे प्रवृत्तायाम् एतस्याम् एव स्पर्धायाम् अक्षयस्य अग्रजः प्रत्यूषः प्रथमं स्थानं प्राप्तवान् आसीत् ।

# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

**अधस्तनकथा पठ्यताम् -**

दाचित् कृष्णकुमारः रामकुमारः च मिलितौ । तदा कृष्णकुमारः अपृच्छत् - "भवतः गृहे त्रिषु दिनेषु चौर्यम् अभवत् इति मया श्रुतम् । किम् एतत् सत्यम् ? चोराः यदा पेटिकां भञ्जयन्तः आसन् तदा अपि किं भवता कोऽपि शब्दः न श्रुतः ?" इति ।

"ते पेटिकां न भञ्जितवन्तः एव । ते उपधानस्य अधः स्थितां कुञ्चिकां प्राप्य लीलया पेटिकाम् उद्घाटितवन्तः" इति अवदत् रामकुमारः ।

"किं भवान् कुञ्चिकां प्रतिदिनम् अपि समाने स्थले एव स्थापयति स्म ? आश्चर्यकरम् एतत्" इति अवदत् कृष्णकुमारः ।

"मया तथा न कृतम् एव" इति उत्तरं दत्तवान् रामकुमारः ।

तदा कृष्णकुमारः कुतूहलेन अपृच्छत् - "एवं तर्हि कुञ्चिका कुत्र स्थाप्यते स्म ?" इति ।

"मया प्रतिदिनं कुञ्चिकास्थापनस्थानं परिवर्त्यते स्म । किन्तु....."

एतस्याः कथायाः पूरणात् पूर्वं भवन्तः अधोनिर्दिष्टान् अंशान् मनसि स्थापयन्तु ।

- रामकुमारः किम् उक्तवान् स्यात् ?
- सः कथं चोराणां ग्रहणे असमर्थः जातः ?
- कृष्णकुमारः रामकुमारं किम् उपदिष्टवान् ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः - ३०, सप्टम्बर् २००४**

नाम ---------------------- वयः ---------- जन्मदिनाङ्कः ----------

विद्यालयः ------------------------------------ कक्ष्या ----------

गृहसङ्केतः ----------------------------------------------------

----------------------------------------------------------------

-------------------------------------- Pincode ------------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

# वार्ताविशेषः

## गजराजः सम्मानितः




वयं नोबेल्प्रशस्तिम् आस्कर्प्रशस्तिं च जानीमः । बूकर्प्रशस्तिः पुलिट्सर्-प्रशस्तिः, भारतेन दीयमाना ज्ञान-पीठप्रशस्तिः इत्यादीन् अपि जानीमः । पद्मभूषणादयः अपि ज्ञायन्ते एव । बालेभ्यः दीयमाना शौर्यप्रशस्तिः अपि ज्ञात-पूर्वा । किन्तु गजाय अपि प्रशस्तिः दीयते इति किं भवद्भिः ज्ञायते ? केरलस्थस्य गुरुवायूरुप्रदेशस्य कृष्णमन्दिरे पद्मनाभ-नामकः गजः प्रमुखः । तेन प्राप्ता अस्ति 'गजरत्न'प्रशस्तिः !

कृष्णमन्दिरेण सप्तत्यधिकाः गजाः पोष्यन्ते । एषः पद्मनाभः ५० वर्षाणि देवालयसेवां यत् कृतवान् तस्य निमित्तं दत्ता अस्ति एषा प्रशस्तिः । प्रशस्तिप्रदानसमारम्भावसरे महती शोभायात्रा व्यवस्थापिता आसीत्, यस्यां च ६० अधिकाः गजाः भागम् अवहन् । माम्मियूरुमन्दिरतः आरब्धा एषा शोभायात्रा गुरुवायूरुकृष्णमन्दिरपर्यन्तं प्रवृत्ता । एतस्मिन् एव मन्दिरे पद्मनाभः प्रशस्त्या पुरस्कृतः ।

१९५८ वर्षे जनवरीमासस्य १८ दिनाङ्के पद्मनाभः गुरुवायूरुमन्दिराय समर्पितः । तदा सः १४ वर्षीयः आसीत् । स्वस्य सुन्दरेण आकारेण व्यवहारेण च सः अल्पे एव काले प्रसिद्धः जातः । तस्य सुदीर्घा शुण्डा ख्यातिं गता । भूमेः स्पर्शानन्तरम् अपि सा वलयीकृता एव तिष्ठति स्म ।

यत्र यत्र मन्दिरसम्बद्धा रथयात्रा प्रवर्तते तत्र सर्वत्र पद्मनाभस्य उपस्थितिः अपेक्ष्यते जनैः । कदाचित् तस्य नयनाय रू. २,२२,२२२.०० अपि केनचित् दत्तानि । गुरुवायूरुदेवस्वेन गजस्य भाटकरूपेण प्राप्ते धने अत्यधिकमूल्यकम् एतत् एव ।

# केरलीया जानपदकथा

## मृदुहृदयः कोचुन्निः

भवन्तः शेरवुड्नामके अरण्ये वसतः राबिन्हुड्नामकस्य साहसगाथां श्रुतवन्तः स्युः । सः इंग्लेण्ड्देशे निवसन् धनिकान् लुण्ठयन् ततः प्राप्तं धनं निर्धनेभ्यः वितरति स्म । तादृशः एव जनः केरलेषु अपि आसीत् । तस्य नाम कोचुन्निः इति । सः धनिकानां विषये निर्दयव्यवहारं करोति स्म । तत्रापि निर्धनानां धनं ये स्वायत्तीकुर्वन्ति तेषां विषये महान् कोपः तस्य ।



यद्यपि कोचुन्निः धनिकान् लुण्ठयति स्म तथापि ततः प्राप्तम् एकमपि रूप्यकं स्वस्य लाभाय न उपयुङ्क्ते स्म । सर्वम् अपि निर्धनेभ्यः ददाति स्म सः । अतः बहवः तस्य प्रशंसां कुर्वन्ति स्म । सः 'कायङ्कुलं कोचुन्निः' इत्येव ख्यातः । कायङ्कुलं केरलस्य कश्चन प्रदेशः, यत्र कोचुन्निः वसति स्म ।

तस्मिन् एव प्रदेशे कश्चन धनिकः आसीत् । सः सुवर्णाभरणादिकं न्यासरूपेण स्वीकृत्य जनेभ्यः धनं ददाति स्म । एवं धनं स्वीकृतवद्भिः अधिका वृद्धिः अपि दातव्या भवति स्म । धनं स्वीकृत्य गताः यदि समये धनं वृद्धिसहितं न प्रत्यर्पयन्ति तर्हि न्यासरूपेण स्थापितम् आभरणं धनिकः वशीकरोति स्म । कालान्तरे तत् विक्रीय धनं प्राप्नोति स्म सः ।

एवं सम्पादितेन धनेन सः एकं विशालं गृहं निर्मितवान् । तत् परितः सुदृढः प्राकारः अपि आसीत् । दर्शनात् भासते स्म यत् एतत् लघुदुर्गम् एव इति ।

'किमर्थम् एतावत् धनं व्ययीकृत्य एतत्सर्वं कारितम् ?' इति यदि कोऽपि पृच्छति तर्हि सः धनिकः वदति स्म – ''कोचुन्नेः काकदृष्टिः कदा कस्य उपरि पतेत् इति कः जानाति ? मम गृहस्य भित्तौ अपि रन्ध्रं कर्तुं सः प्रयासं

न कुर्यात् इत्यत्र कः विश्वासः ? जनैः न्यासरूपेण आभरणानि यानि दीयन्ते तानि मया रक्षणीयानि एव खलु ? तदर्थम् एव एतादृशस्य महाभवनस्य निर्माणं कारितम् अस्ति मया । इदानीं तु निश्चिन्ततया रात्रौ निद्रां कर्तुं शक्नोमि । कोचुन्निः मम गृहं कथमपि प्रवेष्टुं न अर्हति'' इति ।

तस्य एतत् विकत्थनं कोचुन्निना अपि श्रुतम् । 'एतं योग्यः पाठः पाठनीयः' इति चिन्तयन् सः तदर्थम् अवकाशं प्रतीक्षमाणः आसीत् । कदाचित् सः तस्य धनिकस्य समीपं गत्वा ऋणं याचितवान् । यदि धनिकः ऋणदानं निराकुर्यात् तर्हि मया सः लुण्ठनीयः इति चिन्तनम् आसीत् कोचुन्नेः । किन्तु धनिकः विना विरोधं तस्मै ऋणं दत्तवान् एव । अतः कोचुन्निः किमपि कर्तुम् अशक्नुवन् मौनम् आश्रितवान् ।

ततः केषाञ्चित् दिनानाम् अनन्तरं कृष्णन्नायरः आभरणानि न्यासीकृत्य धनिकतः सहस्रं रूप्यकाणि स्वीकृतवान् । एषा वार्ता कोचुन्निना ज्ञाता । अतः कदाचित् सः सायम् अन्धकारप्रसारस्य अनन्तरं धनिकस्य गृहं गतवान् । तस्मिन् समये धनिकः कुत्र भवति, किं करोति इत्यादिकं सूक्ष्मतया परिशीलितवान् आसीत् कोचुन्निः ।

तस्मिन् समये धनिकः तैलेन आत्मनं लिप्त्वा स्नानात् पूर्वम् उद्याने इतस्ततः सञ्चरन् आसीत् ।

एतत् लक्षितवान् कोचुन्निः द्वार-प्रकोष्ठस्य समीपं गत्वा धनिकस्य स्वरम् एव अनुसरन् उक्तवान् - ''भोः, शृणोतु अत्र । कृष्णन्नायरः



ऋणत्वेन नीतं धनं प्रत्यर्प्य आभरणानि नेतुम् आगमिष्यति । प्रकोष्ठे कौशेयस्यूते स्थापितं तदीयम् आभरणं प्रत्यर्पयतु धनं स्वीकृत्य'' इति ।

धनिकस्य पत्नी द्वारप्रकोष्ठसमीपम् आगतवती । तत्र धनस्यूतहस्तः कश्चन जनः दृष्टः तया । सा तस्मात् जनात् धनस्यूतं स्वीकृत्य अन्तः गत्वा आभरणस्यूतम् आनीय तस्मै दत्तवती ।

कोचुन्निः तम् आभरणस्यूतं स्वीकृत्य ततः निर्गतवान् । एतदवसरे धनिकः तु स्नानं कुर्वन् आसीत् ।

यदा ऋणनिमित्तं सूचितः अवधिः समाप्तः तदा कृष्णन्नायरः योग्यया वृद्ध्या सह आगत्य धनिकाय सर्वं दत्त्वा स्वस्य आभरणानां प्रतिस्वीकारम् इष्टवान् । धनिकः अन्तः गत्वा



पेटिकाम् उद्घाटितवान् । तत्र कृष्णन्नायरेण दत्तानाम् आभरणानां स्यूतः न दृष्टः एव ! एतत् ज्ञात्वा धनिकः नितराम् आश्चर्यचकितः जातः ।

धनिकः पत्नीम् आहूय आभरणस्यूत-विषये विचारणं कृतवान् । तदा पत्नी उक्तवती – "अहो, महती विस्मरणशीलता भवतः ! केभ्यश्चित् दिनेभ्यः पूर्वं भवान् एव उक्तवान् आसीत् यत् कृष्णन्नायरतः धनं स्वीकृत्य आभरणस्यूतः प्रत्यर्पणीयः इति । तथैव कृतं मया तदा" इति ।

"तत् धनं कुत्र अस्ति ?" इति धनिकः पत्नीं पृष्टवान् ।

"तत् तु पेटिकायाम् अस्ति" इति उक्तवती पत्नी ।

धनिकः तया सूचितं स्यूतम् उद्घाटितवान् । तत्र धनं न आसीत् एव । प्रत्युत गोलाकाराः नाणकसदृशाः लोहखण्डाः आसन् ।

कृष्णन्नायरः बहिः प्रकोष्ठे प्रतीक्षमाणः आसीत् । प्रकोष्ठात् बहिः आगतः धनिकः क्षमां याचन् प्रवृत्तं सर्वं निवेदितवान् । ततः आभरणानां यावत् मूल्यं भवति तावत् धनं दत्त्वा कृष्णन्नायरं ततः प्रेषितवान् धनिकः । कृष्णन्नायरस्य निर्गमनस्य अनन्तरं धनिकः तत्पत्नी च प्रवृत्तस्य विषये चिन्तनं कुर्वन्तौ उपविष्टवन्तौ । धनिकः पत्नीम् अपृच्छत् – "यः तस्मिन् दिने आगतः आसीत् तस्य मुखं किमपि किं स्मरति भवती ?" इति ।

"कथं शक्यम् आसीत् तत् ? अन्धकारः आसीत् इति तु प्रथमः अंशः । धनं स्वीकृत्य आभरणं दातव्यम् इति भवतः एव स्वरः श्रुतः इति तु द्वितीयः अंशः । अतः मया चिन्तितम् – आगतः कृष्णन्नायरः एव इति" इति उक्तवती पत्नी ।

किञ्चित् विचिन्त्य धनिकः स्वगतम् इव अवदत् – "आगतः कोचुन्निः तु न स्यात् खलु ? सः तु यस्यकस्यचित् अपि ध्वनिम् यथावत् अनुकर्तुं समर्थः स्यात् एव । अतः सः मम धनस्य अपहरणार्थं प्रयासं कृतवान् चेत् न तत्र आश्चर्यम्" इति ।

किञ्चित्कालानन्तरं कोचुन्निः एव तत् गृहं प्रविष्टवान् ।

किमपि अजानन् इव सः तौ अपृच्छत् – "किमर्थं भवतोः मुखं चिन्ताग्रस्तं म्लानं च दृश्यते ?" इति ।

धनिकः तम् अभिज्ञाय भीत्या मौनम् आश्रितवान् । तस्य पत्नी एव प्रवृत्तं सर्वं निवेदितवती ।

तदा कोचुन्निः मन्दहासं प्रकटयन् स्वस्य

वस्त्रेण गोपितं कौशेयस्यूतं धनिकाय यच्छन् अवदत् – ''भवता उक्तानि तानि सर्वाणि आभरणानि अत्र सन्ति । एतानि कृष्णन्-नायराय दत्त्वा धनं प्रतिप्राप्नोतु । 'एतत् दुर्गसदृशं मम भवनं कोचुन्निः प्रवेष्टुं नार्हति' इति भवता सगर्वम् उच्यते स्म इति मया श्रुतम् आसीत् । अतः मम सामर्थ्यनिरूपणाय मया एवं कृतम्'' इति ।

धनिकः क्षमां प्रार्थयमानः कोचुन्नेः हस्तं कृतज्ञतापूर्वकं गृहीतवान् । तस्य नेत्रे आर्द्रे आस्ताम् । तस्मात् दिनात् धनिकः ऋण-स्वीकर्तॄणां पीडां परित्यक्तवान् । अतः कोचुन्नितः कापि पीडा न प्राप्ता तेन । सः कोचुन्निं कृतज्ञतापूर्वकं स्मरति स्म सदापि ।

एतादृशी एव अपरा घटना अपि प्रवृत्ता । तत्प्रदेशे कश्चन शुष्कनारिकेलविक्रेता वणिक् आसीत् । सः क्रिस्तमतीयः । तस्य वाणिज्यं महालाभकरं न आसीत् । व्यवहारनिर्वहणाय तेन ऋणं स्वीकरणीयं भवति स्म कदाचित् । अपरस्मात् ऋणं स्वीकृत्य पूर्वतनम् ऋणं प्रत्यर्पयति स्म सः प्रायः । एवं कथञ्चित् स्वस्य वाणिज्यं निर्वहन् सः चिन्तयति स्म – 'ममापि भाग्यरेखाः कदाचित् विलसेयुः । ऋणस्वीकारं विनैव मया अपि वाणिज्यं क्रियेत' इति ।

कदाचित् सः स्वस्य वाणिज्यं समाप्य आलप्पितः प्रत्यागच्छन् आसीत् । तस्य दिनस्य वाणिज्यम् अधिकलाभकरं न जातम् आसीत् । अतः सः भविष्यविषये चिन्तयन् नौकायाम् उपविष्टवान् । अन्धकार-प्रसारः तदा एव आरब्धः आसीत् इत्यतः नाविकः अपि मौनेन आसीत् । तावता कश्चित् मुखध्वनिना स्वस्य आगमनं सूचित-वान् । द्वित्रक्षणानन्तरं कश्चित् आगत्य तां नौकाम् आरूढवान् ।

तं दृष्ट्वा वणिक् नखशिखान्तं कम्पनं प्राप्त-वान् । यतः तम् अभिज्ञातवान् आसीत् सः । आगतः आसीत् कोचुन्निः एव । कोचुन्निः आज्ञास्वरेण अपृच्छत् – ''कः भवान् ? कुतः आगम्यते भवता ?'' इति ।

''अहं कश्चन शुष्कनारिकेलविक्रेता अस्मि । आलप्पीतः प्रत्यागच्छन् अस्मि'' इति अवदत् वणिक् कम्पमानेन स्वरेण ।

''भवान् शुष्कनारिकेलविक्रेता ? भवता आलप्प्यां किमपि सम्पादितं स्यादेव खलु ? विना विरोधं तत् धनं मह्यं दत्तं चेत् भवतः कोऽपि अपायः न भवेत्'' इति रूक्षस्वरेण अवदत् कोचुन्निः ।

''श्रीमन् ! अहं कश्चन सामान्यः वणिक् । कृपया मां मा पीडयतु'' इति प्रार्थितवान् सः वणिक् ।

''अहमस्मि कोचुन्निः । मया यथा उक्तं तथा न कृतं चेत् किं भवेत् इति भवता ज्ञायेत



एव'' इति शान्तेन स्वरेण अवदत् कोचुन्निः ।

वणिक् वस्त्रस्यूतं निष्कास्य कोचुन्नये दत्तवान् मौनेन ।

''अत्र कियत् धनम् अस्ति ?'' इति अपृच्छत् कोचुन्निः ।

''सार्धद्विशतं रूप्यकाणि सन्ति'' इति अवदत् वणिक् ।

''भवतु । इदानीं भवान् गन्तुम् अर्हति'' इति उक्त्वा नौकातः अवतीर्य अपरां नौकाम् आरुह्य ततः निर्गतवान् कोचुन्निः ।

शारीरकापायः तु कोऽपि न जातः इत्यतः भगवते धन्यवादान् समर्पितवान् वणिक् । गृहं गतः सः पत्नीं प्रवृत्तं सर्वं निवेदितवान् । तदा पत्नी उक्तवती - ''किम् इदानीं कुर्याम वयम् ? शुष्कनारिकेलवाणिज्यम् एव अस्माकं शरणम् । किन्तु धनं विना तत् न प्रवर्तिष्यते । अतः एतत् गृहं विक्रीणीमहे । ततः यत् धनं प्राप्येत तेन भवान् वाणिज्यं करोतु'' इति ।

वणिक् पत्न्याः एतां सूचनाम् अङ्गीकृतवान् । गृहस्य क्रेतुः अन्वेषणम् आरब्धं तेन । प्राचीनं तत् गृहं क्रेतुं कोऽपि उत्साहं न दर्शितवान् । अत्यल्पमूल्येन तत् विक्रेतुं न ऐच्छत् वणिक् ।

कदाचित् सायङ्काले कोचुन्निः तस्य गृहं प्रविष्टवान् । तं दृष्ट्वा वणिक् झटिति आसनात् उत्थितवान् ।

तदा कोचुन्निः अवदत् - ''मित्र ! अलं भीत्या । भवत्तः स्वीकृतं धनं प्रत्यर्पयितुम् अहम् आगतः । भवद्विषये विचारणात् मया ज्ञातं यत् भवान् जीवननिर्वाहाय महत् कष्टम् अनुभवन् अस्ति इति । तस्मिन् दिने मया कस्यचित् कार्यस्य निमित्तं धनम् अपेक्ष्यते स्म । अतः भवतः आयः सर्वोऽपि मया नीतः अगतिकगत्या ! तत् धनम् एतस्मिन् स्यूते अस्ति । कृपया एतत् स्वीकरोतु'' इति ।

धनस्यूतं वणिजे समर्प्य वेगेन ततः निर्गतवान् कोचुन्निः । वणिक् तु स्तम्भवत् स्थितवान् आसीत् । द्वित्राणां क्षणानाम् अनन्तरं सः धनस्यूतम् उद्घाट्य दृष्टवान् । कोचुन्निना यावत् नीतम् आसीत् ततोऽपि चतुर्गुणितं धनम् आसीत् तत्र । एतस्मात् सः वणिक् स्वस्य वाणिज्यं पुनः आरब्धुं विस्तारयितुं च शक्तः जातः ।

सः आकाशं पश्यन् प्रार्थितवान् - ''हे भगवन् ! कोचुन्निम् आशीर्वादेन अनुगृह्णातु कृपया । यतः सः अस्ति करुणाहृदयः'' इति ।



# उत्कोचग्राही

श्रीकान्तः कश्चन भूस्वामी । तस्य कार्यालये करसङ्ग्रहकार्यं करोति स्म शोभनः । सः उत्कोचग्राही । तस्य एषा प्रवृत्तिः भूस्वामिसहायकेन यदा ज्ञातं तदा सः शोभनं सम्यक् उपदिश्य दूरस्थं ग्रामं प्रति तं प्रेषितवान् । तत्र गमनस्य अनन्तरम् अपि शोभनः कृषिकेभ्यः वणिग्भ्यः च उत्कोचं स्वीकरोति स्म एव ।

कदाचित् कश्चन कृषिकः शोभनसमीपम् आगतः । तेन तत्सहोदरेण च परम्पराप्राप्ता भूमिः विभज्य स्वीकृता आसीत् । अतः विभक्तायाः भूमेः विवरणम् उभयोः नाम्नि लेखनीयम् आसीत् । सः ग्रामीणः कृषिकः शोभनस्य कार्यालयं प्रविश्य उत्पीठिकायाः उपरि एकं सुवर्णाङ्गुलीयकं स्थापितवान् । ततः कार्यालयं प्रविशन्तं शोभनं सोपानसमीपे एव दृष्ट्वा - ''एतावत्पर्यन्तं मम भ्राता अत्रैव आसीत् । कस्यचित् कार्यस्य निमित्तम् इदानीं सः कुत्रापि गतः'' इति अवदत् । कार्यालयं प्रविष्टः शोभनः स्वस्य उत्पीठिकायाः उपरि स्थापितं सुवर्णाङ्गुलीयकं स्वीकृत्य कोषे स्थापितवान् ।

सप्ताहः अतीतः चेदपि तस्य कृषिकस्य कार्यं तु न सम्पन्नम् । सप्ताहानन्तरं कृषिकः शोभनस्य कार्यालयम् आगत्य अवदत् - ''श्रीमन् ! आवयोः कार्यं न सम्पन्नम् एव'' इति ।

तदा शोभनः अवदत् - ''गते सप्ताहे भवतः अनुजेन यथा आगतम् आसीत् तथा पुनः पुनः आगन्तव्यम् । तदा एव कार्यं सिद्धं भविष्यति'' इति ।

''श्रीमन् ! सः पुनः पुनः आगन्तुं न अर्हति । यतः सः इदानीं भूस्वामिकार्यालये उद्योगं प्राप्तवान् अस्ति । एतस्य कार्यस्य निमित्तम् इतोऽपि कियत् दातव्यम् इति ज्ञातुम् इच्छति सः'' इति अवदत् कृषिकः ।

एतत् श्रुत्वा स्तब्धः शोभनः - ''तत् कार्यम् एतावता एव सिद्धम् अस्ति । तत्सम्बद्धं व्यवहारपत्रं नेतुम् अर्हति भवान् इदानीम् एव'' इति वदन् तद्व्यवहारसम्बद्धानि पत्राणि कृषिकाय अर्पितवान् ।



# धर्मबोधकेन प्राप्तः बोधः

पूर्वं कश्चन धर्मोपदेशकः आसीत् । स्वस्य मतस्य प्रसारविषये तस्य विशेषासक्तिः । देशात् देशान्तरं गच्छन् सः – 'प्रार्थना कथं करणीया' इति जनान् बोधयति स्म ।

तस्य देशस्य राजा एतस्य धर्मोपदेशकस्य कार्यशैलीं दृष्ट्वा नितरां प्रभावितः जातः । मतप्रसारः, प्रार्थनापद्धतेः बोधनं च तस्यापि प्रियम् एव आसीत् । अतः दूरस्थान् देशान् अपि गन्तुम् आनुकूल्यं यथा स्यात् तथा एकां नौकां दत्तवान् सः तस्मै धर्मोपदेशकाय ।

कदाचित् प्रयाणं समाप्य राजधानीं प्रति आगमनसमये नौकाचालकः धर्मोपदेशकम् अवदत् – ''श्रीमन् ! अत्र समीपे एव कश्चन द्वीपः अस्ति । तत्र त्रयः परिव्राजकाः निवसन्ति । कदाचित् पानजलस्य सङ्ग्रहाय तं द्वीपं गतः अहं तान् दृष्टवान् आसम् । ते आगन्तुकैः सह विरलतया एव सम्भाषन्ते । ध्यानं प्रार्थनां च कुर्वन्तः ते मौनेन एव तिष्ठन्ति सदापि'' इति ।

''एव तर्हि तेषां साहाय्यं करणीयम् एव अस्माभिः'' इति वदन् सः नौकाचालकम् अपृच्छत् – ''किं भवान् मां तत्र नेतुम् अर्हेत् ?'' इति ।

''भवान् यथा वदति तथा आचरणं मम कर्तव्यम्'' इति अवदत् नौकाचालकः ।

ततः नौका तं द्वीपं प्रति गता । तत्र त्रयः वृद्धाः दृष्टाः । वायुकारणतः तेषां श्मश्रु इतस्ततः सञ्चरति स्म । अल्पवस्त्रधारिणः आसन् ते । ते नौकाम् एव आश्चर्येण पश्यन्ति स्म । तेषां दर्शनात् धर्मोपदेशके करुणा उत्पन्ना । सः तान् अवदत् – ''भवत्सु भगवतः दया अस्ति । अतः एव तेन अहम् अत्र प्रेषितः प्रार्थनाक्रमस्य बोधनाय'' इति ।

तेन किम् उक्तम् इति अनवगच्छन्तः ते त्रयः अपि परस्परं मुखं दृष्टवन्तः । धर्मोपदेशकः तदेव वचनं पुनः उच्चारितवान् । तदा तेषु अन्यतमः अवदत् – ''भगवान् कस्यापि विषये करुणाहीनः भवितुं न अर्हति'' इति ।

एतत् श्रुत्वा धर्मोपदेशकः सकृत् म्लानमुखः जातः । प्रार्थना कथं



करणीया, के च शब्दाः प्रयोक्तव्याः इति बोधनं तस्य कर्तव्यम् आसीत् खलु ? अतः सः तान् अपृच्छत् - ''मित्राणि ! भवन्तः यदा प्रार्थनां कुर्वन्ति तदा कं क्रमम् आश्रयन्ति ?'' इति ।

एतत् श्रुत्वा अपि ते परस्परं मुखं दृष्टवन्तः । तेषां प्रार्थनायाः क्रमः कोऽपि निश्चितः न आसीत् । धर्मबोधकः पुनः कांश्चन प्रश्नान् पृष्टवान् । ततः तेन ज्ञातं यत् ते द्वीपवासिनः - ''देव ! भवान् अपि अस्ति, वयमपि स्मः'' इति प्रार्थनासमये वदन्ति इति ।

''एतावदेव ! मित्राणि ! शान्तिं शक्तिं च प्राप्तुं कीदृशी प्रार्थना करणीया इति अहं बोधयिष्यामि । तदनुगुणम् एव आचरन्तु भवन्तः'' इति अवदत् धर्मबोधकः ।

ते द्वीपवासिनः धर्मबोधकस्य कथनस्य श्रवणे अत्युत्सुकाः तु न आसन् । किन्तु तदीयस्य वचनस्य श्रवणे तेषां विरोधः अपि न आसीत् । ततः धर्मबोधकः ध्यानसमये कथम् उपवेष्टव्यम् इति, प्रार्थनायां के च शब्दाः प्रयोक्तव्याः इति च तान् विस्तरेण बोधितवान् घण्टाभ्यन्तरे ।

यत् करणीयं तत् तृप्तिकररूपेण कृतम् इति चिन्तयन् धर्मबोधकः स्वस्य यात्राम् अनुवर्तितवान् ।

सः नौकाचालकम् अवदत् - ''जीवनयात्रा अपि नौकायात्रा इव । लक्ष्यं स्पष्टं न भवति चेत् दीर्घप्रयाणानन्तरम् अपि किमपि न प्राप्येत । अतः जीवनयात्रायाः अपि लक्ष्यं स्पष्टं भवेत्'' इति ।

''युक्तम् उक्तं भवता । यदि भवतः सम्पर्कः तैः न प्राप्तः स्यात् तर्हि तेषां जीवनस्य



अग्रिमानि दिनानि व्यर्थतया यापितानि अभविष्यन् । भवतः दयया तैः लक्ष्यं प्राप्तमस्ति'' इति अवदत् नाविकः ।

'अज्ञाः द्वीपवासिनः सुज्ञानिनः यथा स्युः तथा करणाय धर्मगुरुं द्वीपं प्रति नयता मया उत्तमं कार्यम् एव कृतम्' इति अचिन्तयत् सः ।

सूर्यास्तः जातः । सर्वत्र अन्धकारः प्रसृतः अपि । रात्रेः अन्तिमे यामे समुद्रे महान्तः तरङ्गाः उत्पन्नाः । ते तरङ्गाः क्वचित् पर्वताकाराः अपि भवन्ति स्म । नौका अपायग्रस्ता जाता । नौकायाः समस्थितेः रक्षणाय नाविकेन महान् प्रयासः कृतः । सर्वे यत्नाः यदा विफलाः तदा नौकाचालकः धर्मबोधकम् अवदत् - ''गुरुवर्य ! इदानीं भवतः प्रार्थना एव अस्मान् रक्षितुम् अर्हति'' इति ।

'प्रार्थनामात्रम् एव रक्षति' इति यद्यपि नाविकेन उक्तं तथापि आत्मना क्रियमाणायाः प्रार्थनायाः तादृशं सामर्थ्यं भवेत् इति धर्मबोधकस्य एव आत्मविश्वासः न आसीत् ।



आगत्य उक्तवन्तः - "आर्य ! भवता यत् बोधितं तत् वयं विस्मृतवन्तः स्मः । कृपया तत् पुनः उपदिशतु" इति ।

जलस्य उपरि स्थितम् अस्ति इति, अत्यद्भुतं किमपि क्रियमाणम् अस्ति इति च ते सर्वथा न जानन्ति स्म ।

धर्मोपदेशकः जानुभ्याम् उपविश्य - "मान्याः देवपुत्राः ! भवतां बोधनाय मया यत् उद्युक्तं तत् औद्धत्यं कृपया क्षन्तव्यं भवद्भिः । मया बोधः प्राप्तः अस्ति इदानीम् । कृपया क्षन्तव्यः अहम् । पापी अहं क्षन्तव्यः" इति ।

"मङ्गलमस्तु" इति उक्त्वा ते द्वीपवासिनः वृद्धाः महता वेगेन प्रतिनिवृत्ताः जाताः । क्षणाभ्यन्तरे ते अदृश्यतां गताः अपि । धर्मबोधकः स्वस्य अज्ञानम् औद्धत्यं च स्मरन् पुनः पुनः विलपितवान् ।

नौकातले किं प्रवृत्तम् इति अजानन् नौकाचालकः धर्मबोधकम् अवदत् - "आर्य ! भवता अपूर्वम् एव साधितम् । झञ्झावातः पूर्णतः स्थगितः एव । महानुभावः भवान्" इति ।

धर्मबोधकस्य दुःखम् एतस्य श्रवणात् अधिकं जातम् । अपूर्वस्य कृत्यस्य कर्तारः के इति सः एकः एव जानाति स्म ।

ये वस्तुतः देवस्वरूपाः आसन् तान् देवदर्शनाय मार्गम् उपदेष्टुं प्रयत्नः कृतः यत् तदर्थं महान्तं पश्चात्तापम् अनुभूतवान् सः ।

तथापि तेन किमपि करणीयम् आसीत् एव । अतः सः नौकातलं प्रति गतवान् । महती वृष्टिः, महान् वायुः च आसीत् तत्र । सः प्रार्थनां कर्तुम् उद्युक्तः जातः । मम प्रार्थना विफला जायमाना अस्ति इति अवगतं तेन ।

अकस्मात् तस्य दृष्टिः पूर्वस्यां दिशि पतिता । क्षणाभ्यन्तरे तत्र मेघानाम् अपसारणं दृष्टम् । केषाञ्चित् आकाराणां कृते मेघाः मार्गं कल्पितवन्तः दृश्यन्ते स्म । मन्दे प्रकाशे ते आकाराः अस्पष्टतया दृश्यन्ते स्म । ते च आकाराः नौकाभिमुखम् एव आगच्छन्ति स्म । यथा यथा ते नौकासमीपम् आगताः तथा तथा वृष्टिः स्थगिता, वायोः तीव्रता अपि क्षीणा जाता । समीपम् आगच्छन्तः आकाराः मानवरूपाः इति धर्मबोधकेन अवगतम् । क्षणकालानन्तरं तरङ्गाणाम् उपरि पदं स्थापयन्तः अल्पवस्त्रधारिणः द्वीपवासिनः आगच्छन्तः दृष्टाः तेन । तेषां पवित्रात्मनाम् उपस्थित्या झञ्झावातवृष्ट्यादयः पूर्णतया स्थगिताः आसन् ।

द्वित्रक्षणानन्तरं ते धर्मबोधकस्य समीपम्



# विष्णुपुराणम्

महाराजस्य दशरथस्य पुत्रकामेष्टिः विना विघ्नं परिसमाप्ता । यज्ञकुण्डतः अग्निदेवः पायसपात्रसहिततया प्रत्यक्षः जातः । सः तत् दशरथाय दत्तवान् । दशरथः तत् पायसं द्विधा विभज्य कौसल्यायै कैकेय्यै च दत्तवान् ।

राज्ञः दशरथस्य तिस्रः पत्न्यः – कौसल्या, कैकेयी, सुमित्रा चेति । कौसल्याकैकेय्यौ आत्मना प्राप्तस्य पायसस्य कञ्चित् भागं सुमित्रायै दत्तवत्यौ ।

चैत्रशुक्लनवम्यां कौसल्यायाः गर्भतः विष्णुः नीलमेघकान्त्या शोभमानः श्रीराम-रूपेण जन्म प्राप्तवान् । कैकेय्याः गर्भतः विष्णोः शङ्खपद्मयोः अंशं प्राप्य भरतः जन्म प्राप्तवान् । शेषनागस्य अंशं प्राप्य लक्ष्मणः, चक्रगदयोः अंशेन युक्तः शत्रुघ्नः च सुमित्रायाः गर्भतः जातौ ।

चैत्रशुक्लनवम्यां कोसलराज्ये रामनवमी-रूपेण आनन्दोत्सवः आचरितः । प्रतिवर्षम् एषः आनन्दोत्सवः आचर्यते स्म तस्मिन् दिने । तृतीयं वर्षं सम्प्राप्तम् । तस्मिन् दिने महता वैभवेन बालकानां जन्मदिनोत्सवः आचरितः ।

चैत्रपूर्णिमायाः रात्रौ दशरथः राज्ञीभिः, पुत्रैः, मन्त्रिणा सुमन्त्रेण, आन्तरङ्गिकेण मित्रेण भद्रेण च सह मिष्टान्नभोजने रतः आसीत् ।

कौसल्या रामम् अङ्केन आदाय चन्द्रं प्रदर्शयन्ती भोजयन्ती आसीत् । तदा रामः 'चन्द्रः मह्यम् आवश्यकः' इति रोदनं कृत-वान् । बहुधा सान्त्वनं कृतं चेदपि तस्य रोदनं न स्थगितम् । तदा सुमन्त्रः एकं दर्पणम् आनाय्य तस्मिन् चन्द्रबिम्बं दर्शितवान् । तस्मिन् दर्पणे चन्द्रं स्वस्य प्रतिबिम्बं च दृष्ट्वा 'राम-चन्द्रः' (रामसहितः चन्द्रः) इति वदन् कर-



ताडनं कृतवान् रामः । तस्मात् दिनात् तस्य 'रामचन्द्रः' इति नाम जातम् ।

तदनन्तरं भद्रः रामं स्वस्य अङ्के उपवेश्य दर्पणं दर्शयन् - ''इदानीं कः दृश्यते ?'' इति अपृच्छत् । तदा रामः अवदत् - ''राम-भद्रः'' (रामसहितः भद्रः) इति । तस्मात् 'रामभद्रः' इत्यपि नाम प्राप्तं रामेण ।

एतदवसरे लक्ष्मणभरतशत्रुघ्नाः रामस्य पार्श्वे आगत्य स्थितवन्तः । तस्मिन् समये तेषां शिरोभागे चन्द्रः छत्रम् इव विराजते स्म । समग्रं दृश्यं रामपट्टाभिषेकदृश्यं स्मारयति स्म । एतत् दृष्ट्वा दशरथः आनन्दतुन्दिलः जातः । कौसल्यादयः अपि नितरां सन्तुष्टाः ।

राजकुमाराः गच्छता कालेन प्रवृद्धाः । लक्ष्मणः रामं छाया इव अनुसरति स्म । तयोः पृष्ठतः भरतशत्रुघ्नौ भवतः स्म ।

तेषु चतुर्षु अपि ऐक्यं विशेषतः दृश्यते स्म । ते चत्वारः अपि आचार्यात् वसिष्ठात् सर्वाः विद्याः अधीतवन्तः ।

वसिष्ठः कदाचित् रामम् इत्थं बोधितवान् - ''भोः रामचन्द्र । भवतः वंशस्य मूलपुरुषः भगवान् सूर्यः । सूर्यस्य अपरं नाम विवस्वान् इति । अतः भवतः वंशस्य नाम वैवस्वतवंशः इति ख्यातः अस्ति । भवतः वंशे रघुः नाम श्रेष्ठः राजा आसीत् । अतः भवदीयः वंशः रघुवंशः इत्यपि ख्यातः अस्ति । एतस्मिन् वंशे जाताः राघवाः इति उच्यन्ते । तस्मात् भवान् राघवः अपि'' इति ।

सूतमहर्षिः यदा एतत्सर्वं वदन् आसीत् तदा मुनयः उक्तवन्तः - ''श्रीरामस्य पूर्वजानां चरित्रं वयं न जानीमः । अतः तत् विस्तरेण श्रावयतु कृपया'' इति ।

तदा सूतमहर्षिः श्रीरामस्य पूर्वजानां कथां श्रावयितुम् उद्युक्तः जातः -

''एतस्य कल्पस्य आरम्भे विवस्वतः वंशे उत्पन्नः वैवस्वतः मनुः आसीत् । वैवस्वतमनोः इक्ष्वाकुप्रभृतयः दश पुत्राः आसन् । इक्ष्वाकुः चक्रवर्ती आसीत् । सहस्रशः वर्षाणि तेन राज्यशासनं कृतम् ।

इक्ष्वाकादीनां वंशः प्रवृद्धः । तस्मात् सूर्यवंशः विभिन्नशाखारूपेण सर्वत्र प्रसृतः ।

एतद्वंशीयाः अनेकाः शताब्दीः यावत् भू-मण्डलं शासितवन्तः । प्रजानां सुखार्थं ते विशेषप्रयत्नं कृतवन्तः । तेषां शौर्यगाथाः अपि सर्वत्र प्रसृताः । इक्ष्वाकुवंशे दिलीपः रघुः चेति उभौ राजानौ विशेषतः ख्यातिं गतवन्तौ । तौ उभौ धर्मात्मानौ आस्ताम् ।



दिलीपः निस्सन्तानः आसीत् । सः सन्तान-प्राप्त्यर्थं गुरोः वसिष्ठस्य मार्गदर्शनं प्राप्तवान् । वसिष्ठस्य आदेशस्य अनुगुणं सः कामधेनोः सन्तानं नन्दिनीं श्रद्धया भक्त्या च सेवितवान् ।

कदाचित् नन्दिनी चरणाय अरण्यं गता । रघुः अपि तया सह गतः । नन्दिनी तृणानि चरन्ती कस्याश्चित् गुहायाः समीपं गता । तस्यां गुहायां कश्चन सिंहः आसीत् । सः सिंहः नन्दिनीम् अगृह्णात् । दिलीपः बाणप्रयोगेण सिंहं संहर्तुम् ऐच्छत् । किन्तु बाणग्रहणाय गतः तदीयः हस्तः तत्रैव स्तब्धः जातः ।

सिंहः अवदत् - ''हे राजन् ! एषा धेनुः मम आहारः । मम मारणाय भवता यः प्रयत्नः क्रियते सः अधर्मः । अतः एव भवतः हस्तः स्तब्धः अस्ति'' इति ।

तदा दिलीपः अवदत् - ''नन्दिनी मम आचार्यस्य होमधेनुः । तस्याः रक्षणं मम धर्मः । अतः भवान् धेनुं त्यजतु । मां च खादतु'' इति ।

एतावत् उक्त्वा दिलीपः शिरः अवनमय्य अतिष्ठत् । तावता सिंहः अदृश्यतां गतः । तस्य पुरतः प्रसन्नमुखा नन्दिनी स्थिता आसीत् । सा अवदत् - ''राजन् ! मया भवतः परीक्षा कृता । इदानीं यत् दृष्टं तत् मम माया । भवान् यत् इच्छति तत् अहं दास्यामि'' इति ।

दिलीपः पुत्रप्राप्तिम् अयाचत । धेनुः तत् अङ्गीकृतवती । दिलीपस्य पुत्रः एव रघुः । सः दानवीरत्वेनापि ख्यातः आसीत् ।

कदाचित् कश्चन तपस्वी अतिथित्वेन राज-समीपम् आगतः । तपस्विनः मनसः कामनाम् अवगतवान् रघुः स्वपत्नीं तस्य आश्रमं प्रति प्रेषितवान् । तपस्वी स्वस्य दोषं ज्ञात्वा पश्चात्तापं प्रकटयन् भक्त्या प्रणम्य क्षमां सम्प्रार्थ्य राज्ञीं सादरं प्रासादं प्रति प्रेषितवान् ।

'सकृत् दानरूपेण दत्तं वस्तु न प्रति-स्वीक्रियते मया' इति वदन् रघुः तस्याः प्रति-स्वीकारं निराकृतवान् । तदा राज्ञी खिन्ना सती अवदत् यत् एतस्मात् अपि मम शिरसः छेदः एव वरम् इति । तस्याः अपेक्षायाः अनुगुणं रघुः शिरश्छेदनाय खड्गप्रयोगं कृतवान् । तस्याः कण्ठस्य स्पर्शात् खड्गः मालारूपेण परिवृत्तः जातः । तयोः निष्ठां कर्तव्यपरायणतां च दृष्ट्वा प्रसन्नाः देवाः पुष्पवृष्टिं कृतवन्तः ।

महाराजः रघुः विश्वजिद्यागं कृत्वा समग्रां सम्पत्तिं याचकेभ्यः दत्तवान् । तदा एव कौत्सः नाम मुनिशिष्यः चतुर्दशकोटि सुवर्णनाणकानि याचन् रघुसमीपम् आगतः । रघुः धनस्य



आनयनाय कुबेरसमीपं गतः । कुबेरः रघुं सादरं स्वागतीकृत्य तदीयम् आगमनोद्देशं ज्ञात्वा प्रभूतम् ऐश्वर्यं तस्मै दत्तवान् । रघुः कौत्साय चतुर्दशकोटिं सुवर्णनाणकानि दत्तवान् । अवशिष्टम् अन्येभ्यः याचकेभ्यः दत्तवान् ।

रघुराजस्य पुत्रः अजः । अजः शूरः वीरः पराक्रमी च आसीत् । कस्मिंश्चित् स्वयंवरे भोजराजस्य पुत्री इन्दुमती अजस्य कण्ठे वरणमालाम् अर्पितवती । अजः इन्दुमत्या सह ततः प्रस्थितः । तदा स्वयंवरम् आगत्य इन्दुमतीं प्राप्तुम् अशक्ताः राजानः क्रोधेन अजम् आक्रान्तवन्तः । अजः तान् सर्वान् पराजित्य दूरं प्रेषितवान् ।

एकदा अजः इन्दुमत्या सह उद्याने विहरन् आसीत् । तस्मिन् एव समये आकाशमार्गेण नारदः गच्छन् आसीत् । नारदस्य वीणायां स्थापिता माला अकस्मात् च्युता सती इन्दुमत्याः उपरि पतिता । तस्मात् इन्दुमती तत्रैव प्राणैः वियुक्ता जाता ।

राजा अजः पत्नीवियोगेन नितरां दुःखतप्तः जातः । तदा तत्र नारदः प्रत्यक्षीभूय इन्दुमत्याः पूर्वजन्मवृत्तान्तम् अश्रावयत् ।

कदाचित् इन्द्रः तृणबिन्दुनामकस्य महर्षेः तपस्यायाः भङ्गाय हरिणीनामिकाम् अप्सरसं प्रेषितवान् । हरिणीं दृष्ट्वा क्रुद्धः मुनिः - 'भवती मानवजन्म प्राप्नोतु' इति शापं दत्तवान् । शापमुक्त्युपायम् अपि सः एव सूचितवान् । शापात् मानवजन्म प्राप्तवती अप्सराः एव इन्दुमती । देवलोकस्य मालायाः स्पर्शात् तस्याः शापः अपगतः । अतः सा मानवशरीरं परित्यज्य देवलोकं प्रतिगतवती ।

महाराजस्य अजस्य पुत्रः एव दशरथः । सः कदाचित् शम्बराक्षसेन युद्धं कर्तुं गतः । तत्समये तेन सह कैकेयी अपि आसीत् । युद्धसमये रथस्य चक्रस्य कीलकम् अपगतम् । तदा कैकेयी कीलकरन्ध्रे स्वस्य अङ्गुलीं संस्थाप्य रथपतनं निवारितवती । तस्याः वीरतां दृष्ट्वा प्रसन्नः दशरथः तस्यै वरद्वयं दत्तवान् । कैकेयी उक्तवती यत् कालान्तरे एतयोः उपयोगं करिष्यामि, न इदानीम् इति ।

राजा दशरथः शब्दवेधिबाणप्रयोगे निपुणः आसीत् । कदाचित् सस्यसम्पत्तिं नाशयतां वन्यगजानां निग्रहाय सः अरण्यं गतः । तस्मिन् एव समये कस्याञ्चित् रात्रौ पिपासितयोः वृद्धयोः अन्धयोः मातापित्रोः निमित्तं जलं नेतुं श्रवणकुमारः नाम तरुणः जलाशयम् आगतवान् । कमण्डलुः तेन जले

निमज्जितः । तदा यः शब्दः उत्पन्नः सः दूरात् श्रुतः दशरथेन । गजः एव जलाशये जलं पिबति इति चिन्तयन् दशरथः शब्दम् अनुसृत्य बाणं प्रयुक्तवान् । स च बाणः श्रवणकुमारस्य उरसि लग्नः । तस्मात् व्रणितः श्रवणकुमारः 'हा ! हन्त !' इति आक्रन्दनं कृतवान् ।

श्रवणकुमारस्य आक्रन्दनं श्रुत्वा दिग्भ्रान्तः दशरथः तत्समीपं धावितवान् । तेन श्रवण-कुमारस्य रक्षणं कर्तुं न शक्तम् । मरणात् पूर्वं श्रवणकुमारः अवदत् यत् वृद्धयोः अन्धयोः मम मातापित्रोः कृते अविलम्बेन जलं नीत्वा दातव्यम् इति । दशरथः जलं नीत्वा तयोः कृते दत्तवान्, प्रवृत्तं सर्वं निवेदितवान् च ।

पुत्रशोकेन नितरां तप्तौ तौ वृद्धौ - ''यथा आवाभ्यां पुत्रवियोगशोकः प्राप्तः तथैव भवता अपि मरणकाले पुत्रवियोगशोकः प्राप्यताम्'' इति शापं दत्त्वा प्राणैः वियुक्तौ जातौ ।

सूर्यवंशीयेषु राजसु शरणागतवत्सलत्वेन ख्यातः आसीत् शिबिचक्रवर्ती । शिबेः परीक्षां कर्तुम् इन्द्रः कपोतरूपेण, अग्निदेवश्च श्येन-रूपेण च कदाचित् शिबेः अस्थानं प्रति आगतौ । श्येनः कपोतं ग्रहीतुं प्रयतमानः आसीत् । आश्रयम् अन्विष्यन् गतः कपोतः शिबेः अङ्के उपाविशत् । शिबिः कपोताय अभयं दत्त्वा श्येनम् अवदत् - ''एषः मां शरणं गतः अस्ति । एतस्य रक्षणं मम धर्मः । भवान् आहारात् वञ्चितः यथा न भवेत् तथा करणम् अपि मम कर्तव्यम् एव । अतः भवान् कपोतं विहाय मम मांसं स्वीकरोतु'' इति ।

श्येनः राज्ञः वचनम् अङ्गीकृतवान् । तुला आनीता । तुलायाः एकस्मिन् पार्श्वे कपोतः उपविष्टवान् । अपरस्मिन् पार्श्वे शिबिः स्व-



शरीरमांसं कर्तयित्वा स्थापितवान् । शिबिः स्वस्य जङ्घायाः मांसं समग्रं तुलायां स्थापितवान् । तथापि कपोतमांसयोः भारः समानः न जातः । तदा शिबिः भारस्य समानतायै स्वस्य समग्रं शरीरं तुलायाम् आरोपितवान् ।

शिबेः त्यागं दानवीरतां च दृष्ट्वा प्रसन्नौ इन्द्रः अग्निः च स्वस्य वास्तवरूपेण प्रत्यक्षीभूय शिबये अनेकान् वरान् दत्तवन्तौ ।

क्षत्रियः सन् अपि वसिष्ठः इव ब्रह्मर्षिपदं प्राप्तवान् विश्वामित्रः अपि सूर्यवंशे जातः कश्चन प्रतापी राजा एव ।

एतस्मिन् वंशे राजर्षिः परमविष्णुभक्तः अम्बरीषः नाम राजा आसीत् । लक्ष्मीः एतस्य गृहे पुत्रीरूपेण जन्म प्राप्तवती । तस्याः नाम श्रीमती इति । सा बाल्यात् एव विष्णुं पतिं भावयति स्म । स्वस्य मोहकरूपेण सौन्दर्येण च सा त्रिषु अपि लोकेषु विख्याता आसीत् ।

देवर्षेः नारदस्य गर्वः आसीत् यत् अहं मोहमायया अस्पृष्टः अस्मि इति । मोहमाया मयि कमपि प्रभावं न जनयति इति तस्य दृढः विश्वासः आसीत् । पर्वतः नाम कश्चन ऋषिः नारदेन सह त्रिषु अपि लोकेषु सञ्चारं करोति स्म । कदाचित् नारदः स्वस्य मोहमायातीतत्वविषये पर्वतेन सह चर्चाम् अकरोत् ।

लोकसञ्चारं कुर्वन्तौ पर्वतः नारदः च कदाचित् अम्बरीषस्य प्रासादम् आगतवन्तौ । राजा तौ यथोचितं सत्कृत्य प्रार्थितवान् यत् मम पुत्री आशीर्वादेन अनुग्रहणीया इति ।

यदा आशीर्वादाय श्रीमती प्रणामं कृतवती तदा तौ उभौ अपि मायया आविष्टौ जातौ । तस्याः परमसौन्दर्यं दृष्ट्वा तस्याः परिणयम् इच्छद्भ्यां ताभ्यां परस्परं कलहः आरब्धः ।

राजा अम्बरीषः मुनिवरयोः एतयोः एतं व्यवहारं दृष्ट्वा नितराम् आश्चर्यचकितः । श्रीमत्याः अनुरोधस्य अनुसारम् अम्बरीषः स्वयंवरम् आयोजितवान् । स्वयंवरस्य घोषणां श्रुत्वा तौ मुनी ततः निर्गतवन्तौ ।

स्वर्गं गतः अपि नारदः श्रीमत्याः रूपं विस्मर्तुं न शक्तवान् । सः विष्णुं प्रार्थितवान् यत् मह्यम् अपूर्वं रूपं दातव्यम् इति ।

ईर्ष्यावशं गतः पर्वतमुनिः अपि विष्णुसमीपम् आगत्य प्रार्थितवान् यत् नारदाय कपिरूपं दातव्यम् इति । विष्णुः पर्वतस्य एतां प्रार्थनाम् अङ्गीकृतवान् ।






# सुरेखायाः बुद्धिमत्ता

सुरेखा मातापित्रोः एकमात्रपुत्री । पञ्चवर्षीया सा बहु बुद्धिमती अपि । सर्वदा गृहे मुग्ध-वार्तालापेन सर्वान् तोषयन्ती सा यत्किमपि कुर्वती एव भवति । कदाचित् रात्रिसमये सुरेखायाः माता ताम् आहूय उक्तवती – ''वत्से ! गृहस्य पृष्ठभागे स्थितां सम्मार्जनीम् आनयतु'' इति ।

तदा सुरेखा – ''पृष्ठभागे अन्धकारः अस्ति । तत्र किमपि दृष्टिगोचरं न भवति । अतः अहं न गच्छामि'' इति उक्तवती ।

तदा माता हसन्ती पुत्रीम् उक्तवती – ''वत्से ! अन्धकारात् भीता मा भवतु । तत्र विघ्नेश्वरः अस्ति । अतः भीतेः कारणमेव नास्ति । विघ्नेश्वरः सदा अस्माभिः सहैव स्थितः सन् अस्मान् रक्षति एव'' इति ।

सुरेखा मातुः वचनं श्रद्धया श्रुत्वा आश्चर्येण पुनः पृष्टवती – ''विघ्नेश्वरः तत्र अस्ति इति वचनं सत्यमेव किम् ?'' इति ।

''विघ्नेश्वरः तत्र अस्ति इति तु सत्यमेव । तावदेव न, सः सर्वदा सन्नद्धः तिष्ठति'' इति माता सुरेखां प्रति धैर्यवचनानि उक्तवती ।

सुरेखा किञ्चिद् विचिन्त्य गृहस्य पृष्ठभागं गता । तत्र द्वारसमीपे एव स्थित्वा बहिः हस्तं प्रसार्य सा उक्तवती – ''विघ्नेश्वर ! यदि भवान् तत्र अस्ति तर्हि तत्र स्थितां सम्मार्जनीं मम हस्ते स्थापयतु'' इति ।

# वज्रस्य विक्रयणम्

कस्मिंश्चित् नगरे कश्चन वणिक् आसीत् । सः महान् वञ्चकः । स्वनगरवासिनां वञ्चनां कर्तुम् अशक्नुवन् सः दूरदेशेभ्यः आगतान् प्रवासिजनान् बहुधा वञ्चयति स्म ।

कदाचित् कश्चन वृद्धः तस्य आपणम् आगतः । सः वणिक् कृतकहासं प्रकटयन् तस्य स्वागतं कृतवान् ।

''मम पौत्र्याः विवाहः निश्चितः ! मम अतीवप्रीतिपात्रं सा । अतः अहं तस्यै उपायनरूपेण एकं वज्रं दातुम् इच्छामि । किन्तु मम समीपे केवलं पञ्चशतं रजतनाणकानि सन्ति । एतावता मूल्येन किमपि वज्रं लभ्यते किम् ? मम नौका घण्टाभ्यन्तरे इतः प्रतिष्ठते'' इति सः वृद्धः वणिजम् उक्तवान् ।

''पञ्चशतेन रजतनाणकैः कुत्रापि वज्रं न लभ्यते । तथापि भवान् पौत्रीविषये विशेषप्रीतिमान् इत्यतः भवन्तं निराशं कर्तुं न इच्छामि । अतः तावता एव मूल्येन एकं वज्रं ददामि'' इति उक्त्वा एकं मणिं दत्तवान् सः वणिक् । वस्तुतः वणिजा वृद्धाय यत् दत्तं तत् न वज्रं, प्रत्युत कश्चन काचमणिः आसीत् ।

स्वस्य वञ्चना जाता इति सः वृद्धः न ज्ञातवान् ! सन्तोषेण नौका आरूढा तेन ।

पञ्चानां वर्षाणाम् अनन्तरं कश्चन युवकः तस्य वणिजः आपणम् आगत्य - ''महोदय ! मम पूर्वजाः नगरस्य धनिकेषु अन्यतमाः आसन् । किन्तु विधिवशात् अस्माकं सर्वा सम्पत्तिः नष्टा । सर्वाणि अमूल्यानि वस्तूनि अपि विक्रीतानि ! किन्तु एकं वस्तु अहं महत्या श्रद्धया रक्षितवान् अस्मि । तच्च किञ्चन वज्रम् । किन्तु तस्य वज्रस्यापि विक्रयणकालः सन्निहितः अस्ति । भवान् एतत् क्रीणाति किम् ? न्यूनमूल्येन एव दातुम् अहं सिद्धः'' इति उक्तवान् ।



वज्रविक्रयणम् इति शब्दश्रवणेन एव वणिक् नितरां सन्तुष्टः । उच्चवंशीयाः अत्यल्पेन एव मूल्येन अमूल्यस्य अपि वस्तुनः विक्रयणं कुर्वन्ति इति जानन् सः उक्तवान् - ''वज्रं दर्शयतु'' इति ।

युवकः स्वस्यूते स्थपितां काञ्चन मञ्जूषां सावधानेन

उद्घाटितवान् । तस्यां शोभमानं वस्तु एकम् आसीत् ।



वणिक् महत्या आसक्त्या तत् स्वीकृतवान् । किन्तु क्षणकालेनैव तेन ज्ञातं यत् एतत् न वज्रम्, अपि तु काचमणिः इति ।

अतः सः तं तरुणम् अवदत् – "भोः, एतत् न वज्रम्, अपि तु काचमणिः" इति ।

"उपहासं मा करोतु ! उन्नतस्य वंशस्य गृहे स्थितं वस्तु एतत् । भवता यदि अस्य मूल्यं न ज्ञायेत तर्हि चिन्ता नास्ति । मया अन्यत्र गत्वा विक्रयणं कर्तुं प्रयत्नः क्रियते" इति उक्तवान् सः युवकः ।

"भवतु, अन्यस्य वणिजः समीपं गत्वा एतवत् प्रदर्शयितुम् अर्हति भवान् कामम्" इति उक्तवान् सः वणिक् ।

"तर्हि भवतः अभिप्रायेण एतत् वज्रं न इति खलु ? योग्यं वणिजं दृष्ट्वा उचितेन मूल्येन एतस्य वज्रस्य विक्रयणं कर्तुं मम कापि समस्या नास्ति । किन्तु भवता अपि अस्य श्रेष्ठता का इति ज्ञातव्यं किल ? अतः एतत् वज्रम् अहं भवतः समीपे एव स्थापयामि । यः कोऽपि क्रीणाति चेदेव भवान् मह्यं धनं ददातु" इति उक्तवान् स युवकः ।

"कियता मूल्येन एतस्य विक्रयणं करिष्यामि ?" इति पृष्टवान् सः वणिक् ।

"सहस्रेण रजतनाणकैः" इति उक्त्वा ततः प्रस्थितः सः युवकः पुनः प्रत्यागत्य – "एतत् वज्रं विक्रीतं वा न वा इति पञ्चषमासानन्तरम् आगत्य द्रक्ष्यामि" इति उक्तवान् ।

तस्य युवकस्य गमनस्य अनन्तरं वणिक् तं काचमणिम् एकत्र तिरस्कारेण क्षिप्तवान् ।

पञ्च मासाः अतीताः । कस्मिंश्चित् दिने कश्चन पुरुषः तस्य वणिजः आपणम् आगतः । सः राजकुलीयः इव भासते स्म ।

"मम भगिन्याः राजकुमार्याः विवाहः निश्चितः अस्ति ।" अतः अहं योग्यस्य वज्रस्य अन्वेषणं कुर्वन् अस्मि" इति तेन उक्तम् ।

वणिक् स्वसमीपे स्थितानि उत्तमानि वज्राणि प्रदर्शितवान् । किन्तु सः पुरुषः तेषु एकमपि वज्रं न इष्टवान् । "एतादृशानि वज्राणि मम समीपे एतावता एव सन्ति" इति उक्तवान् सः ।

अकस्मात् तस्य पुरुषस्य दृष्टिः कोणे पतिते काचमणौ संलग्ना । तदीयं मुखं विकसितं जातम् । "एतादृशस्य अमूल्यस्य वज्रस्य अन्वेषणम् एव कुर्वन् आसम् अहम् । पूर्वमेव एतत् किमर्थं न दर्शितं भवता ?" इति किञ्चित् रूक्षस्वरेणैव पृष्टवान् सः ।

"अन्यस्मै एतत् ददामि इति वचनं दत्तवान् अस्मि अहम्" इति सः वणिक् चातुर्येण स्वस्य कार्यं समर्थितवान् । तस्य मनसि आश्चर्यमपि सञ्जातं यत् अहो, वज्रविषये

एतस्य उच्चवंशीयस्य महत् अज्ञानम् इति ।

"अन्येन अस्मै कियतः मूल्यस्य दानम् अङ्गीकृतम् ?" इति तेन पुरुषेण पृष्टम् ।

वणिजः वञ्चनाबुद्धिः इदानीं जागरिता । सः उक्तवान् - "द्विसहस्रं रजतनाणकानि" इति ।

"मया त्रिसहस्रं रजतनाणकानि दीयन्ते । मह्यमेव एतत् ददातु" इति उक्तवान् सः पुरुषः ।

"अस्तु" इति उक्तवान् वणिक् ।

"इदानीं मास्तु । अहम् इदानीं शतं नाणकानि दत्त्वा गच्छामि । सप्ताहाभ्यन्तरे पूर्णं धनं स्वीकृत्य आगमिष्यामि । यदि अहं सप्ताहात् पूर्वं न आगच्छेयं तर्हि भवान् एतत् अन्यस्मै दातुम् अर्हति" इति सः पुरुषः उक्तवान् ।

वणिजः सन्तोषः वर्णनातीतः । 'वज्रस्य स्वामिने युवकाय सहस्रं रजतनाणकानि दत्तानि चेदपि लाभांशः तु अधिकः एव' इति चिन्तयन् सः महान्तं सन्तोषम् अनुभूतवान् ।

अनन्तरदिने एव सः युवकः आगतः, येन पूर्वं काचमणिः दत्तः आसीत् । आगत्य सः उक्तवान् - "एतावता अपि मया दत्तं वज्रं न विक्रीतं चेत् तत् मह्यं प्रत्यर्पयतु । मया कश्चन विषयः ज्ञातः अस्ति यत् कोऽपि राजसम्बन्धी जनः स्वस्य भगिन्याः विवाहार्थं योग्यस्य वज्रस्य अन्वेषणं कुर्वन् अस्ति इति । अतः अहं तस्मै एव एतत् वज्रं विक्रेष्ये" इति ।

"स्वीकरोतु । भवतः सहस्रं रजत-नाणकानि" इति वदन् सः वणिक् तस्मै युवकाय तावत् धनं दत्तवान् ।

युवकः गतः । वणिक् तस्य पुरुषस्य निरीक्षायाम् आसीत् । सप्ताहः अतीतः । मासः अपि अतीतः । तथापि तस्य राज-कुलीयस्य दर्शनमेव न अभवत् ।

राजकुलीयः पुरुषः तु न आगतः एव । किन्तु केनापि पथिकेन सह युवकेन प्रेषितम् एकं पत्रं तेन प्राप्तम् ।

तस्मिन् पत्रे लिखितम् आसीत् - "मया यत् वज्रं विक्रीतं तत् वज्रं मम पितामहेन पञ्चभ्यः वर्षेभ्यः पूर्वं भवत्तः एव क्रीतम् आसीत् ! सः इदानीम् इहलोके नास्ति । किन्तु मया तत् वज्रं भवते एव विक्रीय लाभः सम्पादितः इत्यतः मम महान् सन्तोषः । भवतः अमूल्यं वज्रं पुनः भवतः समीपे एव आगतम् इति भवान् अपि सन्तुष्टः इति मन्ये" इति ।

वणिक् कोपेन किङ्कर्तव्यता-मूढः सन् स्वशिरः घट्टयन् रोदनं कृतवान् ।





# अत्याशा आत्मनाशाय

बहोः कालात् पूर्वं प्रवृत्ता कथा एषा ।

कस्मिंश्चित् ग्रामे गङ्गादासनामकः कश्चन वैद्यः आसीत् । सः चिकित्साविषये रोगस्य अवगमनविषये च नितरां निष्णातः । किन्तु तस्य कश्चन दोषः नाम धनस्य विषये महती आशा आसीत् तस्य । दरिद्राणां विषये तस्य मनसि दयालेशोऽपि न आसीत् । व्याधिग्रस्तः सन् यः कोऽपि आगच्छति चेदपि तस्मात् सः निर्दयं धनं स्वीकरोति स्म एव ।

अतः एव चिकित्सां प्राप्तुं तस्य समीपं गन्तुमेव जनाः बिभ्यति स्म । किन्तु तं ग्रामं परितः बहुदूरं कोऽपि अन्यः वैद्यः नासीत् । अतः निरुपायाः सन्तः जनाः तमेव आश्रयन्ति स्म ।

बलात् धनसम्पादनं कृतं चेदपि गङ्गादासस्य आशा न शान्ता । सा इतोऽपि प्रवृद्धा एव ।

तस्मिन्नेव ग्रामे रामनाथनामकः धनिकः आसीत् । सः दयाशीलः ! सर्वदा परोपकारे एव तस्य प्रवृत्तिः । अतः ग्रामीणाः सर्वेऽपि तम् आदरेण सम्मानयन्ति स्म । किन्तु गङ्गादासः रामनाथस्य जनप्रियतां सोढुं न शक्तवान् । तस्य अभिप्रायः आसीत् यत् रामनाथस्य कारणात् एव मया सम्माननं न प्राप्यते इति । अतः रामनाथं कथञ्चित् अपमानितं कर्तुं सः बहुधा प्रयत्नं कृतवान् । किन्तु तस्य सर्वे यत्नाः विफलाः जाताः ।

कदाचित् गङ्गादासस्य इच्छां पूरयितुमिव कश्चन अवसरः आगतः । रामनाथस्य एकमात्रपुत्रः कदाचित् अस्वस्थः अभवत् । पुत्रस्य परिस्थितिः शोचनीया आसीत् । अतः रामदासः निरुपायः सन् चिकित्सार्थं स्वपुत्रं गङ्गादाससमीपं नीतवान् ।

गङ्गादासः बालकस्य परीक्षां कृतवान् । ततः दीर्घं निश्श्वस्य रामनाथम् उक्तवान् – ''महोदय ! अस्य रोगः प्रबलः एव । एतस्य चिकित्सार्थं महान् प्रयासः करणीयः । महान् धनव्ययः अपि भवेत्'' इति ।

तदा रामनाथः गङ्गादासस्य हस्तौ गृह्णन् –

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



''महोदय ! भवता ज्ञातमेव यत् मम एकः एव पुत्रः इति । महान् धनव्ययः भवति चेदपि चिन्ता नास्ति । भवता अस्य योग्या चिकित्सा करणीया । यः धनव्ययः भवेत् तम् अहं दास्यामि'' इति उक्तवान् ।

गङ्गादासः कृतकं दुःखं प्रकटयन् उक्तवान् - ''रामनाथमहोदय ! भवतः स्वभावं जानामि एव अहम् । अहं तु रोगं परिहर्तुं महान्तं श्रमम् अपि सहे । किन्तु चिकित्सार्थम् एकादशभ्यः वर्षेभ्यः पूर्वं निर्मितं घृतम् अपेक्षितम् । अथवा स्वर्णश्यामकं करणीयं भवति । तदर्थं दशतुलापरिमितं सुवर्णम् आवश्यकम्'' इति ।

वैद्यस्य वचनं श्रुत्वा रामनाथः स्तब्धः जातः । गङ्गादासस्य दुष्टस्वभावं सः जानात्येव । तथापि तं विनयेन प्रार्थितवान् सः - ''आर्य ! मम समग्रां सम्पत्तिं विक्रेष्ये चेदपि तेन धनेन तावत् सुवर्णं क्रेतुं न शक्यते । अतः अन्यम् उपायं कमपि चिन्तयतु कृपया'' इति ।

''अस्य रोगस्य अन्या चिकित्सा नास्ति सर्वथा । अतः निर्णयः भवता एव स्वीकरणीयः । सम्पदमेव यदि इच्छति तर्हि भवतः पुत्रः मृतः भविष्यति'' इति उक्तवान् गङ्गादासः ।

रामनाथः सम्यक् जानाति स्म यत् गङ्गादासस्य पुरतः कथनम् अरण्यरोदनम् इव व्यर्थम् इति । अतः दैवसङ्कल्पः यथा अस्ति तथा भवतु इति निश्चित्य सः तावत् सुवर्णं दातुं सिद्धः अभवत् !

चिकित्सानिमित्तं रामनाथस्य सर्वा सम्पत्तिः विक्रीता अभवत् । गङ्गादासः महान्तं परिश्रमं कृतवान् इव व्यवहरन् चिकित्सां कृतवान् । अन्ते बालः व्याधिमुक्तः अभवत् ।

गङ्गादासेन महत् अन्याय्यं कृतम् इति जानता रामनाथेन काचन प्रतिज्ञा कृता - ''कथञ्चित् गङ्गादासं पाठयिष्यामि । नो चेत् तस्य दुराशायाः सीमा एव न भवेत् । अनेकानि गृहाणि नाशं प्राप्नुयुः'' इति । कतिपयदिनानन्तरं रामनाथः पत्नीपुत्रादिभिः सह तं ग्रामं त्यक्त्वा अन्यत्र कुत्रापि गतः ।

ग्रामे वार्ता प्रसृता यत् रामनाथः गङ्गादासविषये प्रतिकर्तुम् इच्छन् इतः गतः, योग्ये समये सः तस्य गृहं लुण्ठयिष्यति इति । अस्याः वार्तायाः प्रसारकः रामनाथस्य कश्चन बन्धुरेव ।

एतत् श्रुत्वा गङ्गादासः भीतः । यतः सः

लघुग्रामः । अपि च गङ्गादासस्य हितैषी कोऽपि न आसीत् तस्मिन् ग्रामे । अतः बहुधा विचिन्त्य गङ्गादासः निर्णयं कृतवान् यत् मदीयं धनम्, आभरणानि च नगरे स्थितस्य सर्वकारस्य कोशे स्थापनीयानि इति ।

ततः सः अनन्तरदिने गृहे स्थितानि सुवर्णादीनि सर्वाणि स्वीकृत्य सेवकद्वयेन सह नगरं प्रति प्रस्थितः ।

मार्गमध्ये लुण्ठाकाः तम् आक्रान्तवन्तः । भीतः गङ्गादासः तान् रोद्धुमपि अशक्तः अभवत् । ते उपविंशाः आसन् । तैः गृहीतः गङ्गादासः कुत्रचित् गुहायां बन्धी अभवत् । किन्तु ते लुण्ठाकाः गङ्गादासस्य आभरणादीनि न स्पृष्टवन्तः अपि । तेन महत् आश्चर्यं सञ्जातं गङ्गादासस्य । सः तत्रैव स्थितं कञ्चित् उक्तवान् – ''भ्रातः ! मम समीपे किञ्चिद् धनमस्ति । तावत् स्वीकृत्य मां विमुञ्चन्तु'' इति ।

तदा सः तिरस्कारेण उक्तवान् – ''मम नायकः एतादृशीम् आज्ञां न दत्तवान्'' इति ।

तत् श्रुत्वा गङ्गादासः – ''अहं बुभुक्षया पीडितोऽस्मि । खादितुं यत्किञ्चित् लभ्यते किम् ?'' इति पृष्टवान् ।

तदा सः लुण्ठाकः – ''योग्यं धनं दत्तं चेत् एव आहारः लभ्यते'' इति उक्तवान् ।

''कति रूप्यकाणि दातव्यानि ?'' इति पृष्टवान् गङ्गादासः ।

''भोजनार्थं लक्षं रूप्यकाणि, पानार्थं पञ्चाशत्सहस्रं रूप्यकाणि'' इति उक्तवान् लुण्ठाकः ।

एतत् कथनं श्रुत्वा दिग्भ्रान्तः गङ्गादासः – ''अरे ! केवलस्य भोजनस्य तावत् धनं किम् ? एतत् महत् अन्याय्यम्'' इति उच्चैः



उक्तवान् ।

''एतत् न्याय्यम् उत अन्याय्यम् इति अहं न जानामि । भोजनस्य तु एतावत् मूल्यम् अत्र । इदानीं भवता एव निर्णयः करणीयः यत् भोजनम् आवश्यकम् उत धनम् इति'' इति निर्विकारस्वरेण उक्तवान् लुण्ठाकः ।

गङ्गादासः दिनद्वयम् आहारेण विनैव यापितवान् । तस्य मनसि विचारः आगतः यत् मया रामनाथविषये या दुष्टभावना प्रदर्शिता तस्याः एव फलम् एतत् इति । बुभुक्षया शक्तिहीनः जातः सः अचिन्तयत् - 'भोजनं विना यदि अहं मृतः भविष्यामि तर्हि मम सर्वा सम्पत्तिः चोरैः एव स्वीकरिष्यते । तदपेक्षया तेन धनेन बुभुक्षानिवारणमेव उचितम्' इति ।

अतः सः तत्र स्थितं कञ्चन चोरम् आहूय भोजनाय तावतः धनस्य दानम् अङ्गीकृतवान् । सप्ताहद्वये एव तदीयं सर्वम् अपि धनं भोजनाय व्ययितम् अभवत् । ततः आहार-निमित्तं जलनिमित्तं चापि तेन महत् कष्टं सोढव्यम् अभवत् । स्वस्य शोचनीयां परि-स्थितिं दृष्ट्वा महत् दुःखम् अनुभूतवान् सः ।

अन्ते सः चोरनायकं दृष्ट्वा स्वस्य कष्ट-परिस्थितिं निर्वर्ण्य - ''कृपया भोजनं ददातु'' इति याचितवान् ।

तदा चोरनायकः - ''गङ्गादास ! यदा भवता रामनाथस्य सम्पत्तिः स्वाधीनीकृता, ग्रामीणाः अपि यदा पीडिताः, तदा तेषाम् अवस्था अपि एतादृशी एव आसीत् । तैः अनुभूता दशा कीदृशी स्यात् इति इदानीं भवता ज्ञातं स्यात्'' इति उक्तवान् ।

तस्य ध्वनेः परिचयं प्राप्तवान् गङ्गादासः -''रामनाथ ! अहं क्षन्तव्यः ! धनाशा माम् अन्धं कृतवती आसीत् । दुराशया ग्रस्तः अहं भवतः सर्वान् पीडितवान् । सर्वेऽपि मत्तः कष्टम् अनुभूतवन्तः । तेषां परिस्थितिं स्वलाभाय उपयुज्य वैद्यधर्मम् अन्यथा कृत्वा दुष्टः सञ्जातः आसम् अहम् । अद्य भवता अहं योग्येन क्रमेण शिक्षितः । इदानीं प्राणानां मूल्यं ज्ञातवान् अस्मि'' इति वदन् बहुधा रोदनं कृतवान् ।

ततः रामनाथः गङ्गादासं योग्यैः वचनैः समाश्वास्य ग्रामं प्रति नीतवान् । तदारभ्य गङ्गादासे महत् परिवर्तनं जातम् । परोपकारः एव जीवनधर्मः इति ज्ञातवान् सः ।



# आर्यः

13

शान्तिदेवः सेनापतिना वीरसिंहेन सिंहासनात् च्याव्यते । राजा दिवं गतः इति सेनापतिः चिन्तयति । राजा अरण्ये दृष्टिगोचरः भवति । जयानन्दः राज्ञ्याः मरणवार्तां तं निवेद्य वदति यत् भवतः पुत्रः अत्रैव वर्धमानः अस्ति इति । शान्तिदेवः पुत्रेण मेलितुम् इच्छति । ऋषिः वदति – 'तदर्थं समयः न सम्प्राप्तः' इति ।

## राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि-अय्यः

बालः अग्रे कदाचित् वस्तुस्थितिं ज्ञास्यति एव ।

तावत् एषः अत्रैव भवतः समीपे तिष्ठतु । अत्र सः सुरक्षिततया स्थातुम् अर्हति ।

अन्यच्च, अपरं कर्तव्यं मम प्रतीक्षां करोति अन्यत्र ।

तत् किं महाराज ?

वीरसिंहः प्रजानां विषये अत्याचारं करोति । अतः प्रजाभिः तं विरुध्य विद्रोहव्यवहारः क्रियमाणः अस्ति ।

सावधानम् आगच्छतु महाराज ।

मया अपि श्रुतम् अस्ति । युवकानां किञ्चित् सङ्घटनं कृत्वा...

वसन्तनामकः कश्चन युवकः एतत्सर्वं करोति । आर्य ! मया अविलम्बेन गन्तव्यम् ।

मम पुत्रः अत्र कथं वर्धमानः अस्ति इति ज्ञातुं पुनः अहम् अत्र आगमिष्यामि ।

अहं तं विषयं जानामि महाराज ।


विद्रोहिणां गणः वीरसिंहसैनिकानां दृष्टितः आत्मनः रक्षणाय पुनः पुनः वासस्थलं परिवर्तयति ।


एतत् स्थलं निरापदम् इति भाति । अत्रैव कानिचन दिनानि स्थित्वा अस्माकं प्रशिक्षण-कार्यम् अनुवर्तयाम ।
यथाज्ञापयति भवान् ।


ग्रामीणाः गुहाभ्यः बहिः आगत्य धनुर्विद्यायाः अभ्यासं कुर्वन्तः स्वस्य नैपुण्यं वर्धयन्ति । तेषु केचन वेषान्तरं धृत्वा जनानां सैनिकानां च मध्ये सञ्चरन्ति ।


...वार्तायाः सङ्ग्रहणार्थं...
मया वसन्तं प्रति एषा वार्ता प्रेषणीया ।
वयं गोविन्दपुरं गत्वा तण्डुलस्य सङ्ग्रहं करिष्यामः ।


विद्रोहितरुणाः सैनिकान् मार्गे अव-रुन्धन्ति । विरोधं प्राप्य भीताः सैनिकाः पलायनसूत्रं पठन्ति ।
वयं ग्रामीणान् सावधानान् करवाम ।
ते एतास्यां दिशि न आगच्छेयुः ।
ग्रामीणाः अवश्यं सावधाना भवेयुः ।

विद्रोहिणः प्रायः छद्मवेषेण सञ्चरन्ति इति वीरसिंहजनाः जानन्ति ।

महात्मन् ! किं भवान् मम हस्तरेखाणां परिशीलनं कर्तुं शक्नुयात् ?

मम जीवने किं भवेत् इत्यपि किं भवान् वक्तुं शक्नुयात् ?

अवश्यम् । हस्तः दर्श्यताम् ।

अन्तः आगच्छतु तावत् । अन्ये आवां न पश्येयुः इति मम अपेक्षा ।

एतस्मात् वार्तां सङ्ग्रहीतुम् एषः एव सुसमयः ।

महात्मा अन्तः गन्तुम् उद्युक्तः । तावता अकस्मात् कुत्रापि लग्नः तदीयः केशपाशः शिरस्तः पृथक् भवति ।

मया झटिति इतः धावनीयम्

भवान् महात्मा न । रे, कः भवान् ?

सः अस्ति वसन्तः । सः वेगेन ततः धावति ।

अहं श्रान्तः अस्मि । अग्रे धावितुं न अर्हामि ।

सैनिकाः अनुधावनं कुर्वन्ति । ते वसन्तस्य समीपम् एव आगच्छन्ति ।

अये अश्वारोहिन् ! तं गृह्णातु । सः विद्रोही गुप्तचरकार्यं करोति ।

तं गृह्णन्तु । सः गुप्तचरः अस्ति ।

अश्वारोही कश्चन सैनिकं घट्टनेन पातयति ।

शीघ्रं धावित्वा नदीं तीर्त्वा अन्यतः गच्छतु ।

ततः सः अश्वारोही लीलया सङ्कीर्णानदीं तीर्त्वा अग्रे गच्छति ।....


...वसन्तम् उन्नेतुं सन्नाहं करोति च ।
आगच्छतु । मम हस्तं गृह्णातु अविलम्बेन ।


वसन्तः तीरं प्राप्नुवन् त्रातुः मुखं पश्यति । तस्य मुखस्थम् अवगुण्ठनम् अपगतम् आसीत् ।
अस्माक महाराजः !


महाराज ! इतः पूर्वम् अपि भवता एव अहं रक्षितः इत्येतत् स्मरामि । अहं कृतज्ञः अस्मि ।
वसन्त ! अहं भवतः धैर्यस्य प्रशंसां करोमि । किन्तु....


....मम विषयं भवान् अन्यान् कदापि न वदेत् ।
किमर्थं न वक्तव्यम् ? साम्राज्यस्य रक्षणाय भवता जनानां पुरतः आगन्तव्यम् एव ।


तदर्थम् इतोऽपि योग्यः समयः न सम्प्राप्तः । इदानीम् इतः भवान् धावतु । शत्रवः भवन्तं गृह्णीयुः कदाचित् ।
यथा आज्ञा तथा करिष्यामि महाराज । भवतः अन्यविधाः अपि आज्ञाः प्रतीक्षिष्ये ।
अनुवर्तते

# अमूल्याः जलबिन्दवः

"हन्त ! कीदृशः घर्मः एषः !" इति खेदेन अवदत् वीणायाः पिता । सः सोफासने उपविष्टः आसीत् । कण्ठबन्धः पादत्राणम् इत्यादीनां बन्धः शिथिलीकृतः आसीत् तेन । तस्मै शीतलं पानीयम् आनीय दातुं पाकशालां प्रति धावितवती वीणा ।

तावता वीणायाः माता राधिका तत्र आगता । सा आतङ्कग्रस्ता इव लक्ष्यते स्म ।

"किम् अभवत् राधिके ! भवती आतङ्कग्रस्ता इव परिलक्ष्यते ?" इति अपृच्छत् वीणायाः पिता ।



"जलस्य आगमनं घण्टाद्वयात् पूर्वं स्थगितम् । जलं पुनः कदा प्राप्येत इति ज्ञातुं गता आसम् अहम् । एतस्मिन् सप्ताहे तृतीयवारम् एतत् जलस्थगनं जायमानम् अस्ति । अस्माकं वसतिसमुच्चयस्य चतुर्षु अपि भूगर्भकूपेषु जलस्तरः न्यूनः जातः दृश्यते ! अतः पर्यायदिनेषु जलोद्धरणं प्रचलति प्रतिकूपात् । यदि स्थितिः एवमेव अनुवर्तेत तर्हि सप्ताहे द्विवारम् एव जलोद्धरणं सम्भवेत् अपि इति वदति समुच्चयसङ्घस्य कार्यदर्शी" इति अवदत् राधिका ।

"गते सप्ताहे एव कूपस्थस्य पङ्कस्य अपनयनस्य निमित्तं धनं नीतं खलु तेन !" इति अवदत् वीणायाः पिता ।

"स च प्रयत्नः विफलः जातः इति श्रूयते । अतः अन्यस्य भूगर्भकूपस्य खननाय यत्नः प्रचलति । तत्रापि जलप्राप्तिः तु न निश्चिता" इति अवदत् राधिका ।

एतत्सर्वम् आसक्त्या शृण्वती स्थिता वीणा अपृच्छत् – "किं जलसञ्चयाय कोऽपि मार्गः नास्ति ?" इति ।

"जलस्य उपयोगावसरे अवधानदानं चिन्तितं चेत् जलसञ्चयः अवश्यं शक्यः एव । दन्तधावनावसरे नलिकायाः स्थगनं जलसञ्चयाय स्यात् । स्नानकाले धारापातस्य उपयोगं परित्यज्य द्रोण्याः उपयोगः कृतः चेदपि जलसञ्चयः कृतः भवति" – इति अवदत् पिता ।

"मया एते अंशाः न चिन्तिताः आसन् एव । इतःपरम् अहम् अपि जलसञ्चयविषये दत्तावधाना भविष्यामि । जलस्य बिन्दुरपि अमूल्यः" इति अवदत् वीणा ।

# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवदर्थं विज्ञानम्

### सुश्रुतः प्रथमः शस्त्रचिकित्सकः



सुश्रुतः भारतस्य प्रथमशस्त्रचिकित्सकत्वेन ख्यातः । सः क्रि.पू.षष्ठे शतके जातः । वैदिकऋषेः विश्वामित्रस्य शिष्यत्वेन ख्यातः अस्ति सः । सः वाराणस्यां धन्वन्तरितः वैद्यशास्त्रं शस्त्रचिकित्साशास्त्रं च अधीतवान् ।

आत्मना यः शस्त्रचिकित्साक्रमः अनुसृतः तस्य समग्रं विवरणं सः सुश्रुतसंहितायां विस्तरेण विवृतवान् अस्ति । तत्र १०१ विधानि अति-तीक्ष्णानि, २० विधानि तीक्ष्णानि च चिकित्सा-साधनानि विवृतानि सन्ति । एतेषां नामानि पक्षिणां पशूनां च नाम्ना सम्बद्धानि भवन्ति । शणसूत्राणि, वृक्षत्वचः, पशुस्नायवः इत्यादयः शस्त्रचिकित्सा-काले तन्तुत्वेन, सूत्रत्वेन वा उपयुज्यन्ते स्म ।

सुश्रुतः सुनम्यचिकित्सायां यथा तथैव नेत्र-चिकित्सायां, नाडीशस्त्रचिकित्सायां चापि निपुणः आसीत् ।

## परिसरवैचित्र्यम्

### कीटभक्षकं सस्यम्

किं सस्यानि कीटादीन् खदितुम् अर्हन्ति ?

आम् । पुटग्रीवादीनि सस्यानि कदाचित् तैलपादीन् कीटान् खादन्ति । यथा नाम एव सूचयति तथा तस्य सस्यपुष्पस्य आकारः कण्ठस्य इव भवति । एतस्य अग्रभागे पर्णसदृशः भागः भवति ।

पुष्पस्य उदरे कश्चन द्रवः भवति । यः कीटः पुष्पोदरं प्रविशति तस्य शरीरात् जीवसत्त्वं ग्रहीतुं समर्थः भवति स च द्रवः ।

पुटग्रीवसस्ये प्रकारद्वयं दृश्यते । एकः प्रकारः भूमौ प्रसरति । अपरः वृक्षम् आलिङ्ग्य वर्धते । यत् भूमौ प्रसरति तत्रापि पुष्पप्रकारद्वयम् । कानिचन पुष्पाणि भूमिं स्पृशन्ति, पुनः कानिचन घण्टाकारेण ऊर्ध्व-मुखतया वर्धन्ते ।



यदा पुटग्रीवपुष्पं पूर्णतया विकसितं भवति तदा एव पुष्पस्य उपरि स्थितम् आवरणम् उद्घाटितं भवति । पुष्पमुखस्य उद्घाटनस्य अनन्तरम् आवरणं पुनः चलनसमर्थं न भवति । पुष्पोदरे मकरन्दशलाकानां मध्ये मकरन्दस्य उत्पत्तिः भवति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### महाकारकम् उपनेत्रम्

उपनेत्रस्य अन्वेषणं कदा जातम् इति केनापि न ज्ञायते । किन्तु १२६६ तमे वर्षे रोगर्बेकन्नामकः आंग्लः धर्मगुरुः पुस्तकस्य पुटस्य उपरि काचकखण्डं संस्थाप्य अक्षराणि स्थूलतया यथा दृश्येरन् तथा कृतवान् आसीत् इति ज्ञायते । ततः एव उपनेत्रस्य जननं जातं स्यात् ।

किन्तु १३५२तमे वर्षे इटलीदेशे धर्मगुरोः यत् रेखाचित्रं चित्रितम् आसीत् तत्र उपनेत्रधारणं कृतं दृश्यते ।

यदा मुद्रणक्षेत्रे अभिवृद्धिः जाता तदा उपनेत्रस्य आवश्यकता अपि प्रवृद्धा । १६ शतके उत्तरीये इटलीदेशे दक्षिणजर्मनीदेशे च उपनेत्राणां निर्माणं महता प्रमाणेन आरब्धम् ।

अद्य उत्तमायाः दृष्टिशक्तेः निमित्तं तु उपनेत्रं ध्रियते एव । न केवलं तावतः निमित्तम्, अन्येषां विशिष्टोद्देशानां निमित्तम् अपि तत् ध्रियते । तीक्ष्णकिरणानां दर्शनाय कृष्णोपनेत्रं ध्रियते । रात्रौ गगनप्रयाणाय वर्णमयोपनेत्रं ध्रियते । अयसः योजनादिषु कार्येषु उत्पद्यमानानाम् उग्रकिरणानां दर्शनाय अपि विशिष्टानि उपनेत्राणि ध्रियन्ते ।



## अभिवर्ध्यतां ज्ञानशक्तिः

### अधोदत्तानां विवरणानाम् आधारेण किं ज्ञायेरन् कवयः संन्यासिनः वा ?



१. पूर्वं कश्चन लुण्ठाकः यः आसीत् सः अग्रे महाकविः जातः । तस्य पूर्वतनं नाम रत्नाकरः इति । सः कः ?
(अ) नन्दनारः (आ) वल्लुवरः
(इ) वाल्मीकिः ।



२. कृष्णभक्ता काचित् राजस्थाने जाता कृष्णम् अधिकृत्य बहूनि गीतानि रचितवती । सा का ?
(अ) शारदादेवी
(आ) अण्डाळ्
(इ) मीराबायी



३. केनचित् अद्वैताचार्येण सप्तत्यधिकानां तत्त्वशास्त्रसम्प्रदायानाम् ऐक्यं सम्पादितम् । सः कः ?
(अ) आदिशङ्करः
(आ) रामानुजः (इ) भासः



४. कः धार्मिकनायकः 'एशियाखण्डस्य दीपः' इति ख्यातः ?
(अ) श्री रामकृष्णपरमहंसः
(आ) गौतमबुद्धः
(इ) रामानुजाचार्यः

*(उत्तराणि ६६ तमे पृष्ठे)*

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



NARAYANAMURTHY TATA



NARAYANAMURTHY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

**पुरस्कृता शीर्षिका**





**यथार्थजीविविषये सौजन्यम्**
**अयथार्थजीविरूपधरणात् मनोरञ्जनम्**

## अभिनन्दनानि

**'जुलै'मासस्य चित्रशीर्षिकाप्रेषिका -**
**कु. अक्षय नन्दकुमार**
९-२, अशोरगे सेञ्चुरी अपार्टमेण्ट्स्
२९, ४ सीवाई रोड्, वाल्मीकिनगरम्
**चेन्नै - ६०० ०४१**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. वाल्मीकिः
२. मीराबायी
३. आदिशङ्करः
४. गौतमबुद्धः

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)



# चन्दमामा

(नवेम्बर् - २००४ सञ्चिका)

## बालानां विशेषाङ्कः

भवत्सु किशोरेषु लेखकेषु चित्रकारेषु (६-१५ वर्षीयेषु) च निवेदनं यत् आत्मना रचिताः कथाः चित्राणि वा प्रेषयन्तु इति ।

## कथा

● अधिकाधिकतया तिस्रः कथाः प्रेषयितुं शक्याः । ● याभिः भाषाभिः चन्दमामा प्रकाश्यते तासु कयाचित् भाषया कथाः प्रेषयितुं शक्याः । ● कथाः ५०० शब्दात्मिकाः, ततोऽपि न्यूनशब्दात्मिकाः वा स्युः । ● शीर्षकम् आकर्षकं स्यात् । ● चिताः कथाः सर्वाभाषाभिः प्रकाशयिष्यन्ते ।

## चित्राणि

● अधिकाधिकतया त्रीणि चित्राणि प्रेषयितुं शक्यानि । ● चित्रस्य आकारः १५ X १० पादमितः स्यात् । ● चित्रं भारतीय-परम्परानुगुणं स्यात् । चित्रेण सह तत्सम्बद्धानि विवरणवाक्यानि अपि स्युः । ● यत् चित्रं चीयते तस्य रचयिता चेन्नैनगरं प्रति आगत्य चित्रलेखनाय सिद्धः स्यात् । ● प्रयाण-व्ययः आयोजकैः दास्यते ।

## सामान्यसूचनाः

● पासपोर्ट्-आकारकं भावचित्रं (वर्णमयं) प्रेषणीयम् । ● पृथक् पत्रे नाम, वयः (जन्मदिनाङ्कः), कक्ष्या, विद्यालयनाम, गृहसङ्केतः Pine code सहितः, दूरवाणीसङ्ख्या इत्यादिकं लिखित्वा प्रेषणीयम् । ● भागग्रहीतुः कथायां चित्रे वा पालकस्य हस्ताक्षरम् आवश्यकम् । ● प्रेषणसमये पिहितपत्रस्य उपरि **Childran's Special** इति लेखनीयम् ।



**अन्तिमः दिनाङ्कः - १५, सप्टम्बर् २००४**


**चन्दमामा इण्डिया लिमिटेड्**

८२, डिफेन्स् आफीसर्स् कालोनी, एक्काटुथङ्गल्,

**चेन्नै - ६०००९७**

